पटुनाऽपि १ वेदेन । नहि निर्हेतुकमेव केवल २ केनचित् कल्प्यते । स तावत् प्रमाणत. पूर्णानन्द· । मन्त्रवर्णवाक्यस्य सत्यादेः[1]आनन्दादिप्रकरणाना च सामान्यविशेषोक्तित्वात् । तद्गीयमानस्य च तदानन्दादे. पूर्णत्वं भवति पूर्वापरानुसन्धानेन[2] । महावाक्यार्थत्वात् । नहि केवलाल्पवाक्यार्थ पूर्णतामर्हति । नच तदितरः प्रकृतिविरिञ्चादि· पूर्णानन्द इति वक्तुं पार्यते । परतन्त्रत्वात्, परिच्छिन्नत्वाच्च[3] । विष्णोः स्वातन्त्र्यादिसद्भावात्, स्वकीयेषु ब्रह्मादिषु यथायोग्यानन्दपरिपूरणाच्च ३ पूर्णानन्दत्वं ४ सुयुक्तम् ।

शतशतांशादिभावेन सङ्ख्यया परिमाणेन च परिमिता५नन्देभ्यश्चतुर्मुखमुखेभ्यश्चित्प्रकृतेश्च परिच्छिन्नानन्दाया ६ वाङ्मनसागोचरत्वेनामितानन्दस्य विष्णोर्भेदव्यपदेशोऽपि[4] पूर्णानन्दपदवेदितः ७ । अमितस्यैव मुख्यत· पूर्णत्व-८ सम्भवात् ।

---

1 "सत्य ज्ञानमनन्त ब्रह्म" इति वाक्यस्य ।

2 तथाच सूत्रम् – "मान्त्रवर्णिकमेव च गीयते" (१ १ १५) । मन्त्रवर्णेऽनन्तपदेनैवाऽनन्दनिर्देशात् । पूर्णमेव ह्यनन्तम् । तेन पूर्णानन्दपदेनैव मान्त्रवर्णिकताऽपि निरूपिता । तथाचानुव्याख्यानम् – "अनन्तत्व सुनिर्णीत पूर्णानन्दो हि नाल्पके" इति ।

3 तथाच सूत्रम् – "नेतरोऽनुपपत्ते" । (१ १ १६) परिच्छिन्नत्वादिति पूर्णपदवेदित हेतुमाह । परिच्छेदो ह्यपूर्णता । एव पूर्ण एव हि स्वतन्त्रो भवति । स्वकीयेषु स्वयोग्यमानन्द पूरयतीति पूर्णानन्द इति च गमनिकान्तरम ।

4 तथाच सूत्रम् – "भेदव्यपदेशाच्च" (१ १ १७) इति ।

---

१ "पटुना वेदेन" क | २ "निर्हेतुकेन केवलम्" ख ग
३ "–नन्दपूर्णत्वाच्च" ग | ४ "–त्व युक्तम्" ग
५ "च सुमिता–" क ख घ | ६ "परिच्छिन्नाया" क ख. घ
७ "–पदोदित" ख ग | ८ "पूर्णानन्दत्व–" क

नच तत्तदनुमानैरानन्दस्य विष्णोरूनत्वं केनापि स्वापादम् । यथाकामतया तेषामाभासत्वात्[१] । किन्तु यथाश्रुतिसिद्धानेकविशेषाणामनपायात् पूर्णत्वमेव निर्णीत सुज्ञेयम्[1] ।

[2]स्वयोग्यतानुसारेण भक्तिज्ञानादिसाधनैः पूर्णं जीवं स्वसमीप आदाय आ समन्तात् नन्दयति भगवानिति च पूर्णानन्दो भाष्यते । स हि सहभोग मुक्ताय करोति । [3]सोऽयमवयविनि स्वस्मिन्नवयवेषु च स्वकीयेषु प्रत्येकं ज्ञानादिगुणै॰ पूर्ण एवाऽनन्दनामको विष्णुः । स्वगतभेदराहित्यात् । एवञ्चैकस्यैवेश्वरस्या-वयवावयविभाव॰ सम्भवति, श्रुत्युपदिष्टत्वादित्यर्थ॰ ।

एवं तावत् सकलकविकुलतिलको भगवानानन्दतीर्थार्याचार्य[२]वर्यः पूर्णानन्द-पदेनैवाऽनन्दमयाधिकरणपठितसूत्रा[३]र्थमखिलमपि संग्रहेण व्याचख्यौ । एवमेवोत्तरत्रापीति[४] ज्ञातव्यम् । तत्तदधिकरणार्थानां संग्रहस्यैवेह चिकीर्षि-तत्वात्[५] । कुत ? [4]स्वयमेवामुना सात्यर्थविस्तर भाष्यस्य कृतत्वात् ।

---

1 यत पूर्णानन्द इत्येवाऽगमोदित, अत नानुमानमपेक्ष्यते तत्त्ववादे । तथाच सूत्रम् – "कामाच्च नानुमानापेक्षा" (१ १ १८) इति ।

2 पूर्णं जीवमानन्दयतीति व्युत्पत्त्या "अस्मिन्नस्य च तद्योग शास्ति" (१ १ १९) इति सूत्रमपि भाष्यारूढ दर्शयति – स्वयोग्यतेत्यादि ।

3 ननु पुच्छताभिधानादब्रह्मत्वमिति पूर्वपक्षयुक्ते का गति ? आह – सोऽय-मिति । योऽय "आनन्दो ब्रह्म" इति श्रुतिगदित आनन्दनामा भगवान् स सर्वरूपेष्वपि पूर्ण एव । नहि तस्य वस्तुतोऽयवावयविभाव इति भाव ।

4 "ग्रन्थोऽयमपि बह्वर्थो भाष्य चात्यर्थविस्तरम् । बहुज्ञा एव जानन्ति विशेषेणार्थमेतयो " इत्यनुभाष्यपदानि मनसि निधायाऽह – स्वयमेवेत्यादि।

---

१ "त्वात् यथाश्रुति –" क ख ग

२ "– तीर्थाचार्य –" क

३ "– करणपरिपठितानेकसूत्रा –" ख

४ "– त्रापि ज्ञातव्यम्" क

५ "विवक्षितत्वात्" क

करिष्यमाणत्वाच्च सबह्वर्थमनुभाष्यस्यापि । नहि बहुविशेषज्ञचूळार्माणि सर्वज्ञभास्करमन्तरेणैताद्[१]शभाष्यानुभाष्यविरचने चतुरतरचेताश्चतुर्दशभुवने-ष्वस्ति । किम्पुनरेकेनैव वाक्येन पदेनाक्षरेण वा तत्तदधिकरणार्थसग्रहभाषण कुशलमतिर्नास्तीति? यदभिप्रेतामितार्थस्याशांशमपि लेशत एव वय वक्तुं सम्प्रति यथामति यतामहे । नचास्माक तत्प्रतिपादनपाटवमपटुधियाम् । [1]यद्यप्यस्मदाचार्यादयो [२] मध्वसूक्ति[३]सन्दर्शितार्थां[४]स्तत्प्रसादैकबलमवलम्ब्य कथञ्चित् प्रायशः प्रकाशयितु शक्नुवन्ति [५] । तथाऽपि न खलु वय खद्योतसमद्योतत्वादेतद्द्योतितानपि तानशांशेन च प्रकाशयितु शक्नुमः । किं तर्हि ? मनोवाग्भिस्तद्भाष्यभावावर्तनलौल्यादेवायमस्मत्सन्नाहविजृम्भ । तस्मादिहास्मास्तन्मन्तॄन्[2] प्रणन्तॄन्[६] महान्तः क्षन्तुमर्हन्ति ।। ० ।। ६ ।। ० ।।

"अदृश्येऽनात्म्ये[3] –" (तैत्तिरीय० २.७.) इत्यानन्दमयस्यो[७]क्तमदृश्यत्व तु – "अन्त. प्रविष्ट कर्तारम्[८] – न विजानन्ति[4] –" (तै० आ० ३.११ २

1 भाष्य चेत्यनुभाष्ये सग्रहभाष्यमपि परिगृह्यते । तदेतदाह – कि पुनरिति । क्वचित् "अस्मदाचार्याग्नय मध्वसूर्यसन्दर्शितान्" इत्यादि पेठु । तत्र मध्व सूर्य इव । स्वाचार्या अग्नय इव स्वय तु खद्योत इवेत्यर्थप्रकाशन-सामर्थ्ये तरतमभावो रूपकसार ।

2 तन्मन्तारो ये पूर्वाचार्यास्तान् प्रणन्तॄनस्मान् ।

3 "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभय प्रतिष्ठा विन्दते । अथ सोऽभय गतो भवति" इति भृगूपनिषत् ।

4 "अन्त' प्रविष्ट कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्त न विजानन्ति देवा " इत्यानुपूर्वी ।

१ " – मन्तरेण तादृश – " ख

२ " – चार्याग्नयो – " ख घ " – चार्याश्रयात्" ग

३ "मध्वसूर्य – " ख घ ४ " – सन्दर्शितास्तत्प्रसा – " क

५ "शक्नुम ।" ग ६ " – हास्मान् मन्तॄमहान्त " क

७ "इत्युक्तमदृश्यत्वम्" ख ८ "कर्तारमित्यन्तस्थस्य" क

इत्यन्तस्थस्य कस्यचिदुच्यते । सोऽन्तस्थ इह विचार्यते । "इन्द्रो राजा –[1]" (तै० आ० ३.११.६) [१]इत्यादिवचनान्न विष्णुरिति पूर्वः पक्षः । अत्र स्वपक्षं द्योतयति – "अन्तस्तद्धर्मोपदेशात्" (१.१.२०.) इत्यधिकरणम् । "**अन्तरः**" इति ।

अस्मिन् ग्रन्थे "इत्यधिकरणम्", "इति सूत्रम्" इति वाऽस्मद्वाक्यस्य व्याख्याति भगवानिति क्रियाभिसम्बन्धो बोद्धव्यः । व्याख्यायते भगवतेति वा ।

अन्त· स्थित्वा रमत इत्यन्तरः । तथाऽनु[२]व्याख्यातत्वात्[2] । चन्द्रेन्द्रादिषु स्वेच्छया वर्तमान· सर्वकर्ता विष्णुरेव । समुद्रान्तरत्वादित[३]द्धर्मव्यपदेशात्[3] । इन्द्रादेर्व्यधिकरणत्वेन भेदव्यपदेशोऽप्यर्थत· सुगृहीत·[4] । व्यधिकरणत्वं हि भिन्नत्वे प्रमाणम् । अन्यशब्दपर्यायश्चायमन्तरशब्द· प्रसिद्धः ।

यद्यप्येवं विषयश्रुतावुपक्रमा दिभि·सिद्धान्त· साधितो भवत्यधिकरणेषु । तत्र पुनर्वितर्कपाटनाय तत्तल्लिङ्गवैलोम्यप्रकटनेन [४]प्रतिपक्षोऽपि प्रतिक्षिप्त एव

---

1 "इन्द्रो राजा जगतो य ईशे सप्तहोता सप्तधा विक्लृप्त ", "सप्त युञ्जन्ति रथमेकचक्रमेकोऽश्वो वहति सप्तनामा" इत्यादिवचनात् ।

2 "अन्त स्थित्वा रमणकृदन्तर समुदाहृत " इति ।

3 "अन्त समुद्रे मनसा चरन्तम्" इत्यादि । तेन चन्द्रादिष्वन्तर विष्णुरेव । यत स एव समुद्रान्तर श्रूयत इति साध्य च साधन चैकेनैव पदेनाऽह भगवान् भाष्यकार । एवमुत्तरसूत्रेऽपि ।

4 इन्द्राद्यन्तरत्वेन अन्तर्यामित्वेन श्रूयमाणत्वादिन्द्रादिभ्योऽन्तर भिन्न इति द्वितीयसूत्रमपि व्याख्यातम् । तथाहि सूत्रम् – "भेदव्यपदेशाच्चान्य " (१ १ २१) इति ।

---

१ "इति वचना –" ग

२ "तथा व्याख्यातत्वात्" ग

३ "समुद्रेऽन्तर इत्यादि" ग

४ "स्वविपक्षोऽपि" ख

स्यात् । तथाऽपि पुनर्मन्दातिशङ्काशङ्कोः शकलशः शातनेन स्वमतात्यन्तदाढर्यार्थं यथासाधितसिद्धान्तसारानुसाराणि [१] शतश. श्रुत्यन्तराण्युपन्यसनीयानीति युक्ततमम् । तस्मात् तत्सग्रहोऽपि "आगमोदित." इत्युक्त्यैव [२] सुकृतो लक्ष्यते । सूपपत्तिसाधितः स्वसिद्धान्तः सर्वोऽपि तैस्तैर्निर्णीतश्रुतिस्मृतिरूपैरप्यागमैरुदित इति [3] चार्थसम्भवात् । नचैतेऽस्माभिः सनियमम् [४] उपन्यस्यन्ते । मन्दधीत्वात्, ग्रन्थबाहुल्यभयाच्च । एवञ्च "अह तत् तेजः –" (चतुर्वेदशिखा०), "सोऽभिध्याय –" (व्यासस्मृ०) इत्यादिभिर्विवक्षितधर्मद्वारेणान्तस्थो विष्णुरिति निर्णीयते [1] ।। ० ।। ७ ।। ० ।।

अथ "आकाश इति होवाच" (छन्दोग० १.६.) इति श्रूयमाण आकाश. किं भूताख्य उत विष्ण्वाख्य इति विचार्यते । लौकिकप्रसिद्धेर्भूताख्य इति प्राप्तम् । अत आह –" आकाशस्तल्लिङ्गात्" (१.१.२२) इति सूत्रम् । "**खवत्**" इति ।

---

1 तथाहि भाष्यम् –

"'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधा प्रजा ।
अप एव ससर्जाऽदौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैम सहस्रांशुसमप्रभम् ।
यस्मिन् जज्ञे स्वय ब्रह्मा सर्वलोकपितामह ।
आपो नारा इति प्रोक्ता आपो वै नरसूनव ।
अयन तस्य ता पूर्वं तेन नारायण स्मृत' इति व्यासस्मृते ।
'अह तत् तेजो रश्मीन्नारायण पुरुष जातमग्रत ।
पुरुषात् प्रकृतिर्जगदण्ड (त्रिपुरुष मायाबीज जायते)'इति च

चतुर्वेदशिखायाम्" इति ।

---

१ "सिद्धान्तसाराणि –" क. ख. ग.

२ "इति सुकृतो–" क. ख. ग

३ "इत्यर्थसम्भवात्" क

४ "नचैते सनियममस्माभिरुप –" क ग

[1] इह तावदत आहेतिवाक्यस्य तदुपरि परिगृहीतं सूत्रमाहेति सम्बन्धो न ग्राह्य· । तद्व्याख्यानस्य तु [१]मनसाऽपि [२]कर्तुमसामर्थ्यात् । अनारब्धत्वाच्च । ब्रह्मसूत्रार्थसारान्वेषणेन तद्व्याख्यानमुख्या[3]धिकारस्तु मुख्यप्राणस्यैवेति हि किञ्चिदवोचाम । कथ तर्हि [४]तत्सम्बन्ध इति चेत् सूत्रादप्युपरिष्टादनूद्यमान तद्भाष्यं यत् तदाहेत्येवास्माभि· सोऽभिप्रेयते । एतद्व्याख्यानस्यैव[५] शक्त्य-भावेऽपि कारणान्तरेण प्रारब्धत्वात् । इहापि हि [६]मुख्याधिकारिणो देवादय एव भगवन्तः श्रूयन्ते । अस्माक तु तदनुगृहीत एव कश्चिदधिकारलेश आशास्यते । नतु स्वयमेवाधिकार· । सूत्रग्रहण तु व्याचिख्यासयाऽनूद्यमानभाष्यस्य तदीय-त्वज्ञापनायैव क्रियते । अत· पूर्वपक्षपरिहारार्थमिदं सूत्रं व्याख्यानिदं भाष्यमाहेति गृह्यते[७] । अनेकसूत्रग्रहणापेक्षयाऽधिकरणमाहे[८]त्युक्तेऽप्ययमेव न्याय· ।। ० ।।

---

1 अत आह् खवदिति । आकाशस्तल्लिङ्गादिति सूत्रमिति स्ववाक्यस्य योजनाविशेष मनसि निधाय, पौन पुन्येन ग्रन्थगौरव श्रोतृशेमुषीमधि-रोहयितुमाह् – इह् तावदित्यादि । विस्पष्ट चैतत् तत्त्वदीपिकायामपि । तथाहि तद्वचनम् – "नतु वय कदाचिदपि सूत्रपद व्याख्यातुमिच्छाम, शक्नुमो वा" इति चतुर्थस्य द्वितीये । पुनश्चान्तर्भेदाधिकरणेऽप्युक्तम् – "अस्माक तु भाष्यार्थमात्रान्वेषणपरिखिन्नानामनवरत भाष्यानुवादेऽप्य-ध्यासितालस्यानामत आहेत्यभिसूत्र भाष्यानुकरणेऽपि प्रतिवाक्यमन्य एवाभिप्रायो निश्चेतव्य । अत पूर्वपक्षप्राप्ते परिहारार्थ सूत्रमुदाहृत्य तस्य भाष्यमाह भगवानाचार्य इति । सूत्रग्रहण पुनरत्र तद्भाष्यव्याचि-ख्यासितस्यागृहीतप्रतीकस्य सन्निधापकमिति भवति निरवद्यम्" इति ।

---

१ "–नस्य मनसाऽपि" क

२ "कर्तुमशक्यत्वात्" क. ग

३ "तद्व्याख्यानाधिकारस्तु" क

४ "तर्हि सम्बन्ध –" ग

५ "–स्यैवाशक्यभावेऽपि" क

६ "इहापि मुख्या –" ख ग

७ "गृह्येत" ख

८ "–करणमित्यु –" घ.

अत्रानूदितभाष्यस्याय भाव. – "यदेष आकाशः –" (तैत्ति० २.७.) इति प्रागुक्ताकाशो यथा विष्ण्वाख्य. प्रकरणबलात् सिद्ध·, तद्वदयमपि विष्ण्वाख्य एव बोद्धव्यः[1] । परोवरीयस्त्वादितल्लिङ्गात् । नतु भूताख्यः । आ समन्तात् क कामान् वा अश्नाति काशते वेत्याकाशो विष्णुरिति यौगिकरूढे रूढचन्तराद् बलिष्ठत्वात् । श्रुत्यन्तरानुकूलत्वाच्च नितराम् ।

अत्रायमपि न्यायः सुग्रह. – अनुमानस्यावयवा अपि प्रतिज्ञादय पृथक् च प्रमाणत्वमर्हन्ति । प्रयोगप्रकारविशेषेण साधकत्वसम्भवात् । तत किं स्यादिति चेत्, अनुमानस्यावयवेयत्ता[१] कल्पनमितरवादिकृत व्यर्थं स्यात् । व्याप्ति-सद्भावनियमस्यैव प्रयोजकत्वादिति ॥ ० ॥ ८ ॥ ० ॥

"यद् देवान् प्राणयः –", "तद् वै त्व प्राणो अभव."[2] (तै० आ० ३.१४.) इति प्राणो नाम वायुर्हीत्यत आह – "अत एव प्राणः" (१.१.२३.) इति सूत्रम् । "प्रणेता" इति । देवप्रणेता प्राणश्च विष्णुरेव । श्रीलक्ष्मीपतित्वादितल्लिङ्गा-देव[3] ॥ ० ॥ ९ ॥ ० ॥

"ज्योतिहृदय आहितम्" (ऋ० ६.९.६.) इति श्रूयमाण ज्योतिस्त्वग्निरेवेत्यत आह – "ज्योतिश्चरणाभिधानात्" (१.१.२४.), "छन्दोऽभिधानान्नेति चेन्न

---

1 अथायमपि भाष्यस्य भाव – यथा ख ब्रह्मेत्याकाशे प्रसिद्धमपि खमिति पद ब्रह्मणि प्रयुक्त तद्वदाकाशपदमपि । अर्थसाम्यात् । तथाहि खमिति सुखम् । आ समन्तात् क सुखमश्नातीति च स एवार्थ । एतेन सूत्रे मुखत उक्तमुपलक्षणम् । तत्समानजातीयान्यन्यान्यपि पदान्यनेनैव पथा यथा-योग योजनीयानीति सूचितम् ।

2 "तद् वै त्व प्राणो अभवो महान् भोग प्रजापते· । भुज करिष्यमाणो यद् देवान् प्राणयो नव" इत्यानुपूर्वी ।

3 "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" (शुक्लयजु० ३१. २२ ) इति श्रीलक्ष्मीपरिणेता भगवानेव "देवान् प्राणय" इत्युक्तदेवप्रणेताऽपीति स एव प्राण ।

---

१ "– वयवनियमकल्पन –" ख

**तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम्" (१ १ २५.) इत्यन्तर्भेदाधिकरणम्**[1]**। "ज्योतिः" इति। विष्णुरेव ज्योति·। कर्णादीना विचरणाभिधानात्। "ज्योतिर्दीप्यते"**[2]**(छन्दोग० ३ १३.७.) इत्यत्र ज्योतिषो गाय**[१]**त्र्युपक्रमान्नेद विष्णुश्छन्द एवेति चेत्, न। तच्च ज्योतिर्विष्णुरेवाग्निगायत्र्यादित**[२]**त्तच्छब्दैरुपक्रम्योच्यते, नान्यथा। युक्त्यादिभिस्तथा दर्शनात्।** [3]**एव** [3]**त्वभ्युपगम एव च**

1 तथाहि तत्त्वदीपिका – "अस्मिन्नधिकरणे ज्योतिर्विचारोऽवान्तरोऽवगन्तव्य । एक चेदमधिकरणम् । उत्तरानुबद्धत्वात् प्रथमविचारस्य । एतन्नान्तरीयत्वात् तस्य । अत एव चानुवर्तयति प्रथमविचारमुत्तरत्राग्निगायत्र्यादिभाष्ये" इति । "अधिभूताध्यात्माधिवेदगतानाम्" इति न्यायविवरणमपि अस्यैकाधिकरणता पोषयति । अधिभूतमित्याकाश । अध्यात्ममिति प्राण । अधिवेदमिति गायत्रीति ज्योतिर्विचारस्य गायत्र्युपसर्जनत्वादवान्तरत्व स्फुटमेव । "नित्यत्वादेव शब्दस्य" इत्यनुव्याख्यानमपि गायत्रीपदमेव कटाक्षयति । तथाहि सन्यायरत्नावली – "द्योतकरणत्वलिङ्गेन गायत्री ज्योति शब्दाभिधेया । नच तच्छब्देन विष्णुरभिधीयते । नित्यत्वेनानन्याधीनस्वभावत्वात् तस्या" इति । "शब्दस्य गायत्र्यादिशब्दस्य" इति च नयचन्द्रिका । ज्योति शब्दस्यापि मुखत समन्वयलोभात् पक्षान्तरमाश्रित्य तत्त्वप्रकाशिकादिप्रवृत्तिरिति वक्तव्यम् । अधिकरणरचनाया पादादिवन्नियत्यभावात् ।

2 "अथ यदत परो दिवो ज्योतिर्दीप्यते विश्वत पृष्ठेषु सर्वत पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विद वाव तद् यदिदमस्मिन्नन्त पुरुषे ज्योति" इति च्छन्दोगाना श्रुति । "गायत्री वा इद सर्व भूत यदिद किञ्च" इति तत्प्रकरणस्याऽदिम वाक्यम् ।

3 समन्वयादिति पूर्वभाष्येणैव गदितप्राय "भूतादिपादव्यपदेशोपपत्तेश्चैवम्" (१ १ २६) "उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्" (१ १ २७.) इति सूत्रद्वयमेतदधिकरणगमित्याह – एव त्वित्यादि ।

१ "गायतीत्युपक्रमात्" ख

२ "त्र्यादिशब्दवाच्यो विष्णुस्तच्छ –" घ

३ "एव चाभ्युप –" क ग

भूतादिचतुष्पादत्वव्यपदेश उपपद्यते । उपदेशभेदस्त्वपेक्षाभेदादुपपद्यते वस्त्वेकत्वेऽपि ॥०॥१०॥०॥

अतीतप्राणाधिकरणे प्रणेनृपदेन प्राणो विष्णुरित्युक्तम् । अत्रापि स एव स इति तेनैव सुवचम् । शब्दादिसाम्यात् । तस्मादत्र न पृथग् व्याचख्यौ । अयमिह योजनाविशेष. – "प्राणस्तथाऽनुगमात्" (१.१ २८.) इत्यधिकरणम् । चक्षुरादिप्रणेता च [१] प्राणो विष्णुरेव । तच्छब्दादेस्तथाऽनुगमात् । अपिच 'प्राणस्य प्राण" (तलवकार० १ २) इति वचनान्मुख्यप्राणप्रणेता च [२] स एव । नच तस्यापि प्राणोऽनुवतोऽप्यत्याशङ्क्चेत [3] । 'अप्राणो हि –" (आथर्वण० २.१.२.) इति प्रतिषिद्धत्वात् । [1] यद्यपि देवाः शिष्यादिष्वेन प्रणयन्तीति तदुक्ति । तथाऽपि प्रथमत. स्वयमेवाय स्वात्मानं वायावुपदेशेन प्रणयति वायुर्देवेष्विति तेषामस्वातन्त्र्यादविरोध । नच तेषा तत्प्रणयनं नाम नियमनम् । उपदेशमात्रत्वात् । तस्मात् "प्राणो वा अहम् [४] –" (ऐतरेय०

1 नन्वय देवै शिष्यादिपु प्रणीत । न प्रणेता । नैवम् । प्रणीतश्चाय भवति । प्रणेता च भवति । यत स्वयमात्मान वायौ प्रणयति । तेन न पर चक्षुरादे । प्राणस्यापि प्रणेता । इन्द्रप्रणेता विष्णुरेवेन्द्रे स्थित्वा "प्राणो वा अहमस्म्यृपे । प्राणस्त्व प्राण सर्वाणि भूतानि" इत्याद्याह । यत स एव सर्वभूतप्रणेता च । यतश्च अन्त स्थित्वा प्रणेतरि नियन्तरि, शास्तरीति यावत्, शब्दाना मुख्या प्रवृत्तिस्तेन सर्वान्तर सर्वप्रणेता नारायण एव सर्वपदाभिधेय इत्यधिकरणसार । एतेन "न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्" (१ १ २९ ), "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (१ १ ३० ) इति सूत्रे अपि सगृहीते । "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" (१ १ ३१ ) इति चरममपि सूत्रमनेन कथिताशयम् । यतोऽन्त प्रणेतृतयोपासनस्य शास्त्रेषु विहितत्वादुपासाभेदेनैवोपपत्तौ न तावता जीवमुख्यप्राणौ प्राणाविति ।

१ "– प्रणेता प्राणो –" क  २ "– प्रणेताऽपि स एव" क
३ "– क्तोऽप्यस्तीत्याशङ्क्चेत" ग.  ४ "अहमस्मि इत्या –" ख

२.१ २.) इत्यादाविन्द्राद्यन्तर्यामी विष्णुरेव साक्षात् प्रणयनस्वातन्त्र्यात् प्राण [1]इत्युपदिश्यते । ननु मुख्यप्राणो नेन्द्रादिश्चेति सिद्धम् ।। ० ।। ११ ।। ० ।।

पादोक्तमर्थं निगमयति – "इत्याद्यैः प्रसिद्धैरन्यवस्तुषु । उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः" इति । इत्युक्त्या. ज्योतिरन्ता आद्या येषामनुक्तशब्दानां त इत्याद्याः, तैः । [1]स्वात्मनोऽन्यवस्तुषु प्रकृत्यादिजडाजडेषु वाचकत्वेन लोकतः प्रसिद्धैरपि एको विष्णुरेव मुख्यत उच्यते । वैदिकप्रसिद्धैः । तथाऽपि "देवानां नामधा [2] –" (ऋ०सं० १०.८२.३.) इत्येव श्रवणाद् देवादिषु प्रसिद्धैः सूर्यसोमवरुणादिशब्दैरेवोच्यते; नहि घटपटादिशब्दैरिति न मन्तव्यम् । "नामानि सर्वाणि यमाविशन्ति [3] –" (भाल्लवेय०) इत्यादेरविशेषेण सर्ववस्तुषु [2] प्रसिद्धैः सर्वैरपि शब्दैरुच्यत इति वक्तुं "सर्वै." इति विशेषणम् । नचैतदौपचारिकम् । तत्तच्छब्दप्रवृत्तिनिमित्तानां गुणाना सर्वेषामपि विष्णौ विद्यमानत्वात् । तदाह – "सर्वगुणत्वतः" इति । अतो युज्यत एव सर्वशब्दमुख्यार्थत्व विष्णोरित्यर्थ. ।। ० ।। ० ।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
।। प्रथमाध्यायस्य प्रथम पाद ।।

---

1 परमात्मन । "सु सुखम् । तदादत्त इति स्वात्मा परम " इति तत्त्वदीपिका । "स्वात्मना चोत्तरयो " (२ ३ २१ ) इति चोपरि सूत्रम् । "त वा एतमभिवदन्ति स्वात्मेति । एष ह्यानन्दमदत्ते" इति च श्रुति ।

2 "यो न पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवाना नामधा एक एव त स प्रश्न भुवना यन्त्यन्या" इति विश्वकर्मसूक्ते मन्त्र । शुक्लयजुर्वेदे च सप्तदशेऽध्याये ।

3 "नामानि सर्वाणि यमाविशन्ति त वै विष्णु परममुदाहरन्ति" इतीय भाल्लवेयश्रुतिरिति भाष्ये (१.१ १ ) स्थितम् ।

---

१ "प्राण उपदिश्यते" क घ  २ "सर्ववस्तुप्रसिद्धै " क ग

## ॥ प्रथमाध्यायस्य द्वितीयः पादः ॥

ॐ॥ लिङ्गात्मकाना शब्दानामन्यवस्तुषु प्रसिद्धाना, विष्णौ प्रवृत्ति, वक्त्यस्मिन् पादे,।

"–ब्रह्म ततमम्[1]–" (ऐत०आर० २.४ ३) इति विष्णु सर्वगत· प्रागुक्तः। "–आदित्यो रस[2]" (ऐत० आर० ३ २.३) इत्यादावन्य· प्रतीयते। अत आह–"सर्वत्र प्रसिद्धोपदेशात्" (१ २.१.) इत्यधिकरणम्। "सर्वग" इति। विष्णुरेवाऽत्रापि[१] सर्वग उच्यते। तत्प्रसिद्धशब्दोपदेशात्[3]।

"स योऽत –[4]" (ऐत० आर० ३ २.४) इत्यादिना विवक्षितगुणानपि स

---

1 "स एतमेव पुरुष ब्रह्म ततममपश्यत्" इत्यादिश्रुत्या प्रथमपादान्त्याधिकरणे प्राणनामा विष्णुरेव सर्वगत प्रागुक्त। "ततम तततमम्। लोप समान इति सूत्रात्" इति तत्त्वदीपिका।

3 "तस्यैतस्यासावादित्यो रस" इति प्रस्तुत आदित्य एव सर्वगत इति चोत्तरश्रुत्याऽवगम्यते–"स यश्चायमशरीर प्रज्ञात्मा यश्चामावादित्य एकमेतदिति विद्यात्। तस्मात् पुरुष पुरुष प्रत्यादित्यो भवति। सूर्य आत्मा जगतस्तस्थुषश्च एत सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्यादिकया। तेन स एवाऽदित्य प्राण। स एव च ब्रह्म। तस्यैव च सकाशाज्जन्माद्यस्येति स एव विजिज्ञास्यो न विष्णुरिति।

3 नैतद् युक्तम्। सर्व देशकालादिक गत इति पूर्णत्ववाची यो ब्रह्मशब्द स एवास्याऽदित्यस्य प्रसिद्धादित्यत्व निवारयति। विष्णोरेव हि ब्रह्मत्व मुख्यमित्यावेदितम्।

4 "स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्ट" इत्यानुपूर्वी। एतेन "विवक्षितगुणोपपत्तेश्च" (१ २ २) इति द्वितीयसूत्र विवृतम्।

---

१ "विष्णुरेव सर्वत्रापि" ख

एव हि सर्वान् गतः । [1] एवं चक्षुर्मयत्वादीनि लिङ्गान्यपि सर्वाणि प्राप्त । [2] नचाय जीव इति वाच्यम् । एक एव जीव. सर्वाणि शरीराणि गत इति वक्तुमयुक्तेः । नापि ब्रह्मैक्यात् स उच्यते । तथाऽपि तदयुक्तेः । नच तदैक्य वाक्यार्थ इति निरूपणीयम् । [3] कर्मकर्त्रादिभिः सर्वकारकैः सहैवायमिह व्यपदेशं गत इति भेदस्यैव वाक्यार्थत्वसिद्धेः । नह्येकस्यैव वस्तुनः कर्तृकर्मभाव औत्सर्गिक. प्रसिद्धः । तथैव सम्प्रदानत्वं [4] च ।

अपिच, कोऽयमभेदो नाम? किं जीवस्य ब्रह्मभावः, उत ब्रह्मणस्तद्भाव इति वक्तव्यम् । न तावदाद्य उपपद्यते । [5] सर्वजीवाख्यभूतेषु [१] गत. पर एव [२] ब्रह्मेति वेदविद्वचनात् । नाप्यन्त्य. । [6] नहि सर्वभूतहृदयगतस्य तत्तन्नियन्तुः स्मर्यमाणस्य

1 "अनुपपत्तेस्तु न शारीर" (१ २ ३) इति सूत्र व्याख्याति – एवमिति । "चक्षुर्मय श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा" (ऐत० आर० ३ २ ३) इत्यादिनोक्तानि चक्षुर्मयत्वादीनि लिङ्गानि । "सर्वदर्शन-सर्वश्रवणादिसामर्थ्याभिप्रायेण चक्षुर्मयादिशब्दाना परमात्मनि प्रवृत्ति" इति पद्मनाभतीर्थभट्टारका ।

2 अनुपपत्तेरिति सूत्रखण्डमपि भाष्यारूढ करोति नचायमिति । एतेन सर्वग इति हेतुगर्भमित्युक्त भवति । सर्वशरीरगो ह्यत्रोच्यते । जीवश्च न तथेति ।

3 एतेन "कर्मकर्तृव्यपदेशाच्च" (१ २ ४) इति च सूत्र गदिताभिप्राय भवति । "स य एवमेतम् आत्मान परस्मै शसति दुग्धदोहा अस्य वेदा भवन्ति" (ऐत० आर० ३ २ ३) इति श्रुति ।

4 तत्त्वदीपिकाया च – "परस्मा इति सम्प्रदानव्यपदेशाच्च" इति ।

5 "एतमेव ब्रह्मेत्याचक्षते" इति भाष्यपूरितशेष "शब्दविशेषात्" (१ २ ५) इति सूत्र निराह – सर्वजीवेति ।

6 "स्मृतेश्च" (१ २ ६) इति षष्ठ सूत्र व्याख्याति – नहीति । तथाहि स्मर्यते – "अहमात्मा गुडाकेश सर्वभूताशयस्थित" (गी० १० २०) इति । एतेनैव "अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेव व्योमवच्च" (१ २ ७) इत्यपि सूत्र विवृतम् । सर्वभूतहृदयसुषिररूपाल्प-स्थानगत्वेनापि स एव सर्वगतो विष्णुरुपास्य इति । व्योमवदिति तु खवदिति पूर्वमेव निगदव्याख्यातम् ।

१ "सर्वभूताख्यजीवेषु" ग ' २ "गत परमेव" क ख. ग

तद्भावः सम्भवति । अनुभवविरोधात् । तस्मादज्ञानविजृम्भितमेव जीवब्रह्मैक्य-मतम् ।

[1] नन्वहो खलु युष्मदीश्वरो जीवशरीरेऽपि तिष्ठति, आहोस्विन्नेति वाच्यम् । आद्ये जीववदीश्वरस्यापि दु.खभोगप्राप्ति । अन्त्ये सर्वगतत्वप्रतिज्ञाहानिरिति सम एव पर्यनुयोग इति । तच्चाज्ञानवासनाविजृम्भितम् । नहीश्वरस्य स्वातन्त्र्यात् पारतन्त्र्यकृतं दु.खित्व क्वचित् प्राप्यते । नरकवासिनोऽपि हीश्वरस्य दु·खित्वं श्रुतिभिर्निवारितम् । यस्य प्रसादभाजनेषु भूतेषु परतन्त्रेष्वपि यदिद-मवश्य निवार्यते तस्मिन्नेव कथ [1]तदिदमाशङ्क्येत? कैमुत्यन्यायनिवारितत्वात् । तदेतदाह – सर्वसामर्थ्यं गत इति योजनया तद्भाष्येणैव । [2] तस्माद् विष्णुरेव सर्वदेशकालवस्तुषु स्थितत्वेन तत्तत्प्रतिपादकसर्ववाक्यगत· परमवाच्यार्थ इति निरवद्यम् ।। ० ।। १ ।। ० ।।]

"अत्ता चराचरग्रहणात्" (१.२ ६ ) इत्यधिकरणम् । "अत्ता" इति । "सर्वं वा अत्ति – [3]" (बृह० ३.२.५ ) इति नादितिरत्त्री[२] निगद्यते । किन्तु? [4] चराचरा-[3]दनवचनाद्विष्णुरेवात्ता युक्त । नह्यदितेः सर्वजगत्संहारः श्रुत्यन्तरसम्मत ।

1 "सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" (१ २ ८ ) इत्यधिकरणान्तिमसूत्र विवृणोति – नन्वहो इत्यादिना ।

2 अधिकरणाङ्ग फलोपसहारमपि "सर्वग" इति भाष्येणैवावादीद् भाष्यकार इत्याह – तस्मादित्यादि ।

3 "स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वम्" इति हि सर्वस्य चराचरस्यादनमुच्यते ।

4 निरुपपद पदमत्तेति सर्वात्तारमेवाहेत्याह – चराचरेत्यादि ।

१ "तस्मिन्नेव तदिद कथमा –" क घ २ "नादितिरत्र" ग

३ "चराचरवच –" क ख ग

[1] अपिच, "विसर्गगत्यत्त्यभिजल्पशिल्पा." (भाग० ५ ११.१० ) इत्यादौ पुत्रोत्पादन[1]रूपस्य वीर्यविसर्गस्यापि भोगमात्रत्वादत्तिशब्दवाच्यत्व दृष्टम् । अतोऽत्तृशब्देनैव सवत्सराबादिस्रष्टा च सुवच. । एव चास्य नारायणप्रकरणत्व चाऽवेदित स्यात् ।। ० ।। २ ।। ० ।।

"गुहा प्रविष्टावात्मानौ हि तद्दर्शनात्" (१.२ ११ ) [2]इत्यधिकरणमप्यनेनैव व्याख्याति । "त्रेधा विहित वा इदमन्नम् । अशन पान खाद इति" ( ) इति श्रुतेरशनपानयोरुभयोरप्यन्नशब्दवाच्यत्वादशितृपात्रोश्चात्तृशब्दवाच्यत्व सिद्धयति । एवञ्चास्मिन्नधिकरणे सोऽत्तृशब्द पातार ब्रूते । हृदयगुहाया निहितावृत पिबन्तावात्मान्तरात्मनामानौ विष्णो· स्वरूपाशावेव, नतु जीव-

---

1 "प्रकरणाच्च" (१ २ १० ) इति सूत्रस्यापीदमेव भाष्यम् – अत्तेति । तदेतदाह – अपिचेत्यादि । पायुपादोपस्थमुखहस्ताना विसर्गगत्यत्त्यभि-जल्पशिल्पा व्यापारा इति हि भागवते ब्राह्मणरहूगणसवादे । "अत्तिरुपस्थ-विषय" इति भागवततात्पर्यम् । यत्तु "अतिरुपस्थविषय" इति तात्पर्ये विजयध्वजीये च पठयते स लिपिकृत्प्रमाद एव । अत एव तत्त्वदीपिकायाम-प्यानन्दमयनये – "नहि भक्ष्यत्वमेवाद्यत्वम् । विसर्गगत्यत्त्यभिजल्पशिल्पा इति हि भागवते" इत्युक्तम् । एवञ्चात्ता स्रष्टा सवत्सराबादीनामिति फलितम् । स हि नारायणस्य धर्म । स हि सवत्सरनामान ब्रह्माणम-पश्चाऽदौ ससर्ज । तच्च स्रष्टृत्वमत्र प्रकरणे श्रुतमिति तदपि तस्य नारायणत्व दृढयति । तथाहि श्रूयते बृहदारण्यके (३ २ १-५ ) – "नैवेह किञ्चनाऽसीत् । मृत्युनैवेदमावृतमासीत् । तस्यार्चत आपोऽजायन्त । तद्यदपा शर आसीत् सा पृथिव्यभवत् सवत्सरोऽभवत वागभवत् स तया तेनाऽत्मनेद सर्वमसृजत" इत्यादि ।

---

१ "पुत्रोत्पादरूपस्य" क

२ "इत्यधिकरणम् ।" ख

परौ । तयोर्विष्णुत्वदर्शनात् ।[1] एवञ्चैको विष्णुरेव द्विरूप पातेत्यर्थः । सोमस्य पाता पशोरत्तेति यज्ञभुक्त्वाभिप्रायेण यजमानसेतुत्वं चात्र विवक्षितमिति "यः सेतुरीजानानाम् –" (कठ० १ ३ २.) इति विशेषणमपि भाषितमिति [2]भाव ॥ ० ॥ ३ ॥ ० ॥

"अन्तर उपपत्ते." (१.२ १३.) इत्येतदधिकरण चान्तस्थाधिकरणभाष्येणैव व्याख्यात भवति – "अन्तर." इति[3] । तथाहि –[4] यः सूर्यसोमविद्युत्सु अक्षिणि च दृश्यमान· पुरुष. सोऽन्तरोऽपि विष्णुरेव । तल्लिङ्गशब्दोपपत्तेः । नच "– सोऽहम् –" (छन्दो० ४ ११-१३ १) इत्यग्निवाक्यविरोध । तदन्तर-

---

1 अत्तेति एकवचनलब्धमर्थमाह – एवञ्चेत्यादि । एतेनैव भाष्यवचनेन "ऋत पिबन्तौ सुकृतस्य लोके गुहा प्रविष्टौ परमे परार्द्धे" (कठ० १ ३ १ ) इति विषयवाक्यमप्यसूचि । ऋतात्ता हि विष्णुरेवेति युक्तिरप्यदर्शि । द्वित्व चैकस्य युज्यत इति दोषोऽपि पर्यहारि । "घर्मा समन्ता – (ऋ० १० ११४ १ ) इति मन्त्रेण समन्तो व्याप्त एव द्विरूप श्रूयत इत्यत्रापि सर्वगोऽत्ता विष्णुरेव द्विरूप इति सवादोऽप्यवादि । आत्मशब्दसमानार्थस्य पुनरत्तृशब्दस्यैव परिग्रहादात्मान्तरात्मनामनी ते रूपे इत्यप्यगाद्येव ।

2 तथाहि सूत्रम् – "विशेषणाच्च" (१ २ १२.) इति । "य सेतुरीजानानामक्षर ब्रह्म यत्परमिति" इति तत्र पूरणभाष्यम् ।

3 एतदधिकरणोपसग्रहायैवान्तरित्येवानुक्त्वा "अन्तर" इति रेफमदन्तमाह भाष्यकार पूर्वमेव । नहि महान्त परावरज्ञा पूर्वं कृत्वोत्तर स्मरन्ति । किन्तूत्तर स्मरन्त एव पूर्व कुर्वन्ति ।

4 तथाहि श्रुतिश्छन्दोगानाम् – "य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति" (४ ११ १ ) "य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति" (४ १२ १ ) "य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति" (४ १३ १ ) इति । अग्नीना गार्हपत्यान्वाहार्यपचनाहवनीयानामिद क्रमाद् वचनमुपकोसल प्रति । अन्ते गुरुश्च सत्यकाम आगत्याऽह – "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' (४ १५ १ ) इत्यादि ।

त्वात् । [1]चक्षुराख्यनिजस्थानस्यासङ्गत्व नाम विशेषमापादयतीत्यप्यन्तर[१] उच्यते । [2]वामभामनेतृत्वं च देवादिप्रणेतृत्वेऽन्तर्भूतम् । सुखविशिष्टत्वमत्रापि[२] ह्यन्ता रमत इति रेफेणाभिप्रेयते[3] । श्रुतोपनिषत्कगति "जनार्दनं यान्ति" इति प्रकटं वक्ष्यते[4] । नच सूर्यादिनियमनायाग्निरलम्[5] । स्वयमेव नियम्य-त्वात् ॥ ० ॥ ४ ॥ ० ॥

नन्वीश्वरोऽपि सर्वान्तरो नेदं नियच्छति । रमणरहणप्रसङ्गादित्यत आह — "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" (१ २.१८) इत्यधिकरणम् । "नियन्ता च" इति । न [3]केवलमीश्वर. सर्वस्यान्तर इत्येव मन्तव्य[४] । किन्त्वस्य

1 "विशेषेऽवसरेऽन्तरम्" (अभि० रत्न० ५ ८२) इति हलायुधाभिधानात् विशेषापादकोऽन्तर इति मनसि निधाय "स्थानादिव्यपदेशाच्च" (१ २ १४) इत्यपि सूत्र भाष्यमारोहयति — चक्षुरित्यादि । तथाहि श्रूयते — "तद् यद्यप्यस्मिन् सर्पिर्वोदक वा सिञ्चति वर्त्मनी एव गच्छति" (छन्दो० ४ १५ १) इत्यादि ।

2 आत्मशक्तिस्तु प्रणेतेति पूर्वमेव व्याख्यातेत्याह — वामेत्यादि । "वाम सौन्दर्यम्, भाम तेज । सौन्दर्यतेज प्रधानत्वात् स्त्रीपुरुषा वामभाम-शब्दिता" इति तत्त्वदीपिका । तदेतदाह — देवादिप्रणेतृत्वेऽन्तर्भूतमिति । तथाचेय श्रुति — "एष उ एव वामनि" (छन्दो० ४ १५ २) इति, "एष उ एव भामनि" (छन्दो० ४ १५ ३) इति च ।

3 "सुखविशिष्टाभिधानादेव च" (१ २ १५) इति हि सूत्रम् । "प्राणो ब्रह्म क ब्रह्म ख ब्रह्म" (छन्दो० ४ १० ५) इति श्रुति सुखविशिष्टतामह । तामत्र रेफेणाऽह । पूर्व "प्रणेता खवत्" इति च स्फुटमाह ।

4 तथाहि सूत्रम् — "श्रुतोपनिषत्कगत्यभिधानाच्च" (१ २ १६) इति । अन्ते स्वसमीपे रमयति तारतम्यमालायामन्ते स्थितेन प्राणेन द्वारभूतेनेति कगतिरत्रापि सुवचा ।

5 एतेन "अनवस्थितेरसम्भवाच्च नेतर" (१ २ १७) इति सूत्र कटाक्षयति ।

१ "तीत्यन्तर —" क ख ग
२ "विशिष्टत्व विस्पष्ट अत्रापि" घ
३ "नच केवल —" ग
४ "मन्तव्यम्" ग

नियन्ता च भवति । अन्तर्यामीति यावत् । कुत ? अधिदैवादिषु[१] प्रकरणेषु प्रतिपदार्थम् – "अन्तरो यमयति –" (बृह० ५ ७ ३-२३ ) इति नियमनधर्मस्यापि व्यक्त व्यपदेशात्[1] । नच सोऽन्तर्यामी न विष्णुरिति निरूपणीयम् । [2] अविदितत्वादितद्धर्मव्यपदेशात् । नच तावता रतिविहतिस्तस्याऽपद्येत[२] । विचित्रसन्ततानन्तशक्तित्वात् । [3] नच स्मार्त प्रधान शारीरो वाऽन्तर्यामीति वक्तव्यम् । तदीयधर्मानुक्तेरन्यधर्मोक्तेश्च । तस्माद् विष्णुरेव सर्वस्य प्रकृत्यादेरन्तर्यामी श्रुत एष्टव्य. ॥ ० ॥ ५ ॥ ० ॥

एवं तावत् सर्वगतत्वाद्या भावधर्मा परस्य गुणा. साधिता. । अत एवास्य नाभावधर्मा गुणा युज्येरन्नित्यत आह – "अदृश्यत्वादिगुणको धर्मोक्ते" ( १ २.२१ ) इत्यधिकरणम् । **"दृश्यत्वाद्युज्झितः"** इति । दृश्यत्व नाम परिच्छिन्नत्वम् । आदिशब्दात् परतन्त्रत्वम् । ताभ्यामुज्झित । प्राकृतेन्द्रियगोचरत्व तद्वत्त्व वा दृश्यत्वादि । अतस्तदुज्झित इति वाऽर्थ. । एवञ्च तत्तद्दोषाणामभावाश्च[३] गुणा एवास्येत्यभिप्राय· ।

नचात्र तादृग्गुणक. प्रकृतिर्विरिञ्चादिर्वा भवत्विति मन्तव्यम् । परविद्याविषयत्वादिविष्णुधर्मोक्ते । अत्र भगवत. प्राकृतेन्द्रियसम्बन्धस्य पारतन्त्र्यस्य च

1 "अन्तर" इत्यपि भाष्यमत्राप्यावर्तते । "य पृथिव्या तिष्ठन् पृथिव्या अन्तर" (बृह० ५ ७ ३ ) "य सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तर" (बृह० ५ ७ १५ ) इत्यादिना सर्वान्तरो विष्णुरेव हि तत्रोच्यत इति ।

2 "दृश्यत्वाद्युज्झित" इत्यावृत्तस्यार्थमाह – अविदितत्वादीति ।

3 "नच स्मार्तमतद्धर्माभिलापात्" ( १ २ १९ ), "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" ( १ २ २० ) इत्यवशिष्ट सूत्रद्वय विवृणोति – नच स्मार्तमित्यादि । प्रधानस्य शारीरस्य च नियन्तृत्वेन श्रवणात् "यो विज्ञाने तिष्टन्" (बृह० ५ ७ २२ ) इत्यादि न प्रधानजीवावत्राभिधीयेते इत्यादि ।

१ "अधिदैवादिप्रकरणेषु" ख घ

२ "रतिविरहस्तस्यापद्येत" क. ग "तस्य सम्पद्येत" ख

३ "–षाभावश्च गुण एवा –" ग

निषेधात् स्वत एव नित्यमुक्तत्वमवगम्यते । तच्चास्य [1]तादृक्सर्वज्ञत्वानुमापकम् । व्याप्यत्वात् । एवञ्चास्य सर्वज्ञत्वादिना जडादजडाच्च प्रकृतेर्विशेषणम्, जन्मादिमतो विरिञ्चाद् रुद्राच्च भेदव्यपदेशश्चार्थतो व्याख्यातौ स्याताम्[2] । अथवा, प्राकृतेन्द्रियसम्बन्धः परिच्छिन्नत्व च दृश्यत्वम् । आदिशब्दाद[१]सर्वज्ञत्वाद्या जन्माद्याश्च दोषा गृह्यन्ते । ताभ्या तैश्चोज्झित इत्यदृश्यत्वादिगुणको विशेषणभेदव्यपदेशौ च मुखत एव भाषिता भवेयुः । उभयथा च विष्णुरेवादृश्यत्वापाणिपादत्वादिगुणक इत्यर्थः ।

नन्वत्तिनियत्यादिक्रियाया. कादाचित्कत्वादत्तृत्वादिकमपि तात्कालिकमेवेति नित्य नास्ति । अदृश्यत्वं च केनचिद् दर्शनकाले विनश्यतीत्यत आह – "सदा" इति । क्रियादिधर्माणामपि शक्तिरूपेण नित्यत्वादत्तृत्वादिकमपि सदाकाल विद्यते । न केवल तात्कालिकम् । अदृश्यत्वशक्तेरप्यनपायात् । "ज्ञान नित्य क्रिया नित्या बलं शक्ति. परात्मन."[3] (पैङ्गिश्रु०) इत्यादिश्रुतेश्च[4] ॥ ० ॥ ६ ॥०॥

"वैश्वानरः साधारणशब्दविशेषात्" (१.२ २४.) इत्यधिकरणव्याख्यानमुखेन पादार्थं निगमयति – "**विश्वजीवान्तरत्वाद्यैर्लिङ्गैः सर्वैर्युत. स हि**" इति।

---

1 तादृगिति नित्य निरवधि च सर्वज्ञत्वम् । वस्तुतस्तु एतदपि "सर्वग" इति पूर्वभाष्येण सर्व सर्वदा सर्वत्रावगच्छतीति निगदनिरूपितमेव ।

2 तथाच सूत्रम् – "विशेषणभेदव्यपदेशाभ्या च नेतरौ" (१ २ २२ ) इति ।

3 इय पैङ्गिश्रुतिरित्यनुव्याख्याने (१ २ ७ ) स्थितम् । "नित्यानन्दोऽव्यय पूर्णो भगवान् विष्णुरच्युत" इत्युत्तरार्द्धम् ।

4 "रूपोपन्यासाच्च" (१ २ २३ ) इति चरम सूत्रमपि "दृश्यत्वाद्युज्झितश्च" इति चकारान्वयेन व्याख्यातमेष्टव्यम् । रूपवानपि दृश्यो न भवतीति । अस्य ग्रन्थस्य मननार्थत्वादेवमेव व्याख्यानौचित्यात् ।

---

१ " – शब्देनासर्व – " क

[1] – अभिविमानमात्मान वैश्वानरमुपास्ते –" (छन्दोग० ५ १८.१ ) इत्यत्र वैश्वानराख्य कि हुतवह उताहो हरिरिति सन्दिह्यते । "अयमग्निर्वैश्वानरः– [2]" (बृह० ७.६ १ ) इत्यादिश्रुते.[१], पाचकत्वादिलिङ्गाच्चाग्निरिति पूर्वः पक्षः । नाय वह्नि , विष्णुरेवेति स्वपक्ष । अत्र युक्तीर्वक्ति विश्वजीवादिभाष्येण । विष्णुरेव हि विश्वजीवान्तरत्वाद्यैर्लिङ्गैर्युत । विश्वजीवान्तरत्वं हि वैश्वानर-शब्दप्रवृत्तिहेतु । [3]अभितो विगतमानत्वम्, आदानादिकर्तृत्वम्, पाचकत्वम्, हुतस्थानत्वम्, पूर्णत्वम्, पुरुषविधत्व चेत्यादीनि तत्प्रकरणपठितान्याद्यशब्द-परिगृहीतलिङ्गानि[4] । तैरपि सर्वैर्युत ।

---

1 "यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मान वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इत्यानुपूर्वी ।

2 "अयमग्निर्वैश्वानरो योऽयमन्त पुरुषे येनेदमन्न पच्यते यदिदमद्यते" इति वाजसनेयके । तत्र वैश्वानरस्याग्नित्वश्रुति , पच्यत इति पाचकत्व-लिङ्ग च तस्य हुतवहतामेवाऽवेदयत ।

3 अभिविमानमित्यभितो विगतमानत्वम्, आत्मानमित्यादानादिकर्तृत्वम्, पच्यत इति पाचकत्वम्, "तद्यद् भक्त प्रथममागच्छेत् तद्धोमीयम्" (छन्दो० ५ १९ १ ) "वैश्वानरे तद्धुत स्यात्" (छन्दो० ५ २४ ४ ) इत्यादि हुतस्थानत्वम्, "को न आत्मा कि ब्रह्म" (छन्दो० ५ ११ १ ) इति प्रकरणोपक्रमे ब्रह्मशब्देन पूर्णत्वम्, "मूर्धैव सुतेजाश्चक्षुर्विश्वरूप " (छन्दो० ५ १८ २ ) इत्यादि पुरुषविधत्वम् ।

4 एतेन "शब्दादिभ्योऽन्त प्रतिष्ठानान्नेति चेन्न तथा दृष्टयुपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते" ( १ २ २६ ) इति सूत्र व्याख्यातम् । स विष्णुरेवैतैर्लिङ्गैर्युत इत्यवधारणात् "अत एव न देवता भूत च" ( १ २ २७)

---

१ "इति श्रुते " क ग

अथवा, विश्वजीवान्तरत्वयुतो वैश्वानरो विष्णुरेवेति विस्पष्टं प्रतिज्ञाय युक्त्यपेक्षायामाद्यशब्देनाऽदातृत्वादिसर्वलिङ्गैर्युत इति ता वक्ति[1] । तस्मा- दुभयथाऽपि विष्णुरेव वैश्वानरः । [1]निगमनावस्थाया सर्वगतत्वात्तृत्वाद्यानि तद्वाक्योक्तानि । तत्तदधिकरणेषु मुखतोऽनुक्तानामपि सग्रहार्थम् "सर्वै" इत्युक्तम् । उक्त च महोपनिषदि – "सर्वनामा सर्वकर्मा सर्वलिङ्ग· सर्वगुण

---

इत्यपि गतार्थम् । भाष्ये "स हि" इति स्मृतिप्रसिद्धि द्योतयितुम् । तेन "अह वैश्वानरो भूत्वा प्राणिना देहमाश्रित" (गीता० १५ १४) इति स्मृति स्मारयति । तेन च "स्मर्यमाणमनुमान स्यादिति" ( १ २ २५ ) इति च सूत्रमुपसगृह्णाति । "साक्षादप्यविरोधम् –" ( १ २ २८ ) इत्यादि- पञ्चसूत्री तु समन्वयप्रकारप्रतिपादनपरा समन्वयादित्येव सगृहीना भवेदिति न पृथग् व्याचख्यौ । अथवा विश्वजीवान्तरत्वाद्यैरिति नदपि व्याचख्यौ । तथाहि विश्वान्तरत्वान्मुख्ययोगेन विश्वनामा भगवान् इति परमार्थ । नथाऽप्यमुख्यतया लोकव्यवहार इत्यविरोध । तदेतदाह – "साक्षादप्य। विरोध जैमिनि" (१ २ २८) इति । आदिपदेन "अभिव्यक्तेरित्याश्म- रथ्य" (१ २ २९), "अनुस्मृतेर्बादरि" (१ २ ३०), "सम्पत्तेरिति जैमिनि" (१ २ ३१), "आमनन्ति चैनमस्मिन्" (१ २ ३२) इति सूत्रचतुष्टयोक्ता युक्तय सगृहीता इति सर्वमवदातम् । एवमनेके प्रकारा क्रियासमभिहारेण भाष्ये परिस्फुरन्ति । अर्थानामपरिच्छेदेन ग्रथना- सम्भवादेवोपरम्यते । सुधियामनुक्तमपि सूहम्, दुर्धियामुक्तमपि बहुशो दुरुहमिति च ।

1 नन्वाद्यशब्देनाधिकरणयुक्तय एव चेद् विवक्ष्यन्ते हन्त कथ तर्हि तन्मुखेन पादार्थनिगमनम्, न । निगमनावस्थायामन्यार्थविवक्षणादित्याह – निगम- नेत्यादि ।

---

१ "इति वक्ति" ग

**सर्वकाम. सर्वधर्म· सर्वरूप " इति । [1]तस्मादन्यत्र प्रसिद्धैर्नामात्मकैर्लिङ्गात्मकैश्च[१] शब्दैर्विष्णुरेव मुख्यत उच्यत इति सिद्धम् ॥ ० ॥ ७ ॥ ० ॥**

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
प्रथमाध्यायस्य द्वितीय पाद

---

1 पादद्वयफलितमाह – तस्मादिति ।

---

१ "लिङ्गात्मकै सर्वशब्दै –" ख

## ॥ प्रथमाध्यायस्य तृतीयः पादः ॥

ॐ ॥ अतीतपादयोर्नामलिङ्गशब्दवाच्यत्व विष्णोरयोगव्यवच्छेदेन साधितम् । तदेवान्ययोगव्यवच्छेदेनापि साधयत्यस्मिन् पादे । उपपन्नश्चैवम्भाव । [1]शास्त्रयोनिसमन्वयसूत्राभ्या [१]तद्वत् प्रतिज्ञातत्वात् ।

"अथ परा –[2]" (आथ० १ १ ५.) इत्यादौ परविद्याविषयत्वेनोक्तस्य विष्णो "यस्मिन् द्यौ –" (आथ० २ २ ५ ) इत्यादिके द्युभ्वाद्यायतनवाक्ये प्राणाधारत्वं श्रुतम् । "प्राणानां ग्रन्थि.–" (महाना० ३५ ) इत्यादौ रुद्रस्यापि तत्प्रतीतेः[२] सोऽपि द्युभ्वाद्यायतन स्यादित्याशङ्क्याऽऽह – "द्युभ्वाद्यायतन स्वशब्दात्" (१ ३.१ ) इत्यधिकरणम् । "**सर्वाश्रय.**" इति । सर्वस्य द्युभ्वादेश्चराचरस्य जगत आयतन स्थानमाश्रयस्त्वेको नारायण एव श्रुतिस्मृति-

---

1 शास्त्रयोनिसूत्रेणायोग व्यवच्छिद्य समन्वययोगेन तस्यैवान्ययोगमपि व्यवचिच्छेद हि ।

2 "अथ परा यया तदक्षरमधिगम्यते" इति विष्णो परविद्याविषयत्वमुक्त पूर्वपादीयषष्ठाधिकरणे दृश्यत्वाद्युज्झित इति । तत्रैव चाऽथर्वण्यामुपनिषदि उपरिष्टाद् "यस्मिन् द्यौ पृथिवी चान्तरिक्षमोत मन सह प्राणैश्च सर्वै" इति तस्यैव परविद्याविषयस्य प्राणाधारत्वमपि श्रूयते । तच्च विशेषणमन्यगमिति नारायणोपनिपदेवाऽऽह – "प्राणाना ग्रन्थिरसि रुद्रो मा विशान्तक" इत्यादि । तेनोभयत्रापि सम्भवद् द्युभ्वाद्यायतनत्व व्यवच्छेदमेवान्ययोगस्य व्यवच्छिनत्तीति ।

---

१ "–सूत्राभ्या प्रति –" क

२ "रुद्रस्यापि प्रतीते" क

प्रसिद्ध. ।[1] सर्वेषामात्मा स्वामी च मुख्याश्रय उक्तः । स एव हि मुक्तानामपि सर्वेषामुपसृप्य आश्रयः[2] ।

नचानुमितरुद्र [3]सर्वाश्रय उच्यते । तच्छब्दाभावात्, अन्यशब्दभावाच्च । अत एव न जीवो वायुश्च द्युभ्वाद्याश्रय. । अत्रेशजीवयोराश्रयाश्रयिभावलक्षण· केवलभेदश्च सूचित.[4] । तस्माद् ब्रह्मरुद्रादिजगतो विष्णुरेवाऽश्रय इति भाव. ।। ० ।। १ ।। ० ।।

**"भूमा सम्प्रसादादध्युपदेशात्"** (१ ३ ८) इत्यधिकरणम् । **"पूर्णगुण."** इति । पूर्णा सद्गुणा अस्येति पूर्णगुणो भूमा भूयानिति[1] भाव । अथवा,

---

1 "तमेवैक जानथ आत्मानम्" (आथ० २ २ ५) इत्यात्मशब्दोऽपि हेतूकृत सर्वाश्रय इति कथितार्थ इत्याह – सर्वेषामिति । एतेन स्वशब्दादिति योगभाग कृतार्थ ।

2 तथाहि सूत्रम् – "मुक्तोपसृप्यव्यपदेशात्" (१ ३ २) इति । "अमृतस्यैष सेतु" (आथ० २ २ ५) इति तद्व्यपदेश ।

3 सर्वाश्रय इत्यात्मशब्द हेतूकुर्वताऽतच्छब्दत्वमपि रुद्रादिषु कथितमेवेति मन्वान आह – नचेत्यादि । तथाहि सूत्रे – "नाऽनुमानमतच्छब्दात्" (१ ३ ३), "प्राणभृच्च" (१ ३ ४) इति ।

4 "भेदव्यपदेशात्" (१ ३ ५) इति हि सूत्रम् । किञ्च सर्वस्या अपि परविद्याया स एव विषयतयाऽऽश्रय इति ततोऽपि हेतो स एव द्युभ्वाद्यायतनम् । तथाहि सूत्रम् – "प्रकरणात्" (१ ३ ६) इति । "द्वे विद्ये वेदितव्ये" (आथ० १ १ ४) इति परविद्याविषयत्वोक्त्या तस्य ह्येतत् प्रकरणमिति तदर्थात् । सर्वस्य जीवजातस्य सखित्वेनाऽश्रय इति "द्वा सुपर्णा सयुजा सखाया –" (आथ ३ १ १) इत्युक्ते स्थित्यदने च भापिते भवत । तथाच सूत्रम् – "स्थित्यदनाभ्या च" (१ ३ ७) इति । दिङ्मात्रप्रदर्शनायैवोपक्रान्तत्वात् क्वचित्क्वचिदेव व्याकरोति । क्वचिच्चोहस्यान्तर ददज्जहाति च टीकाकृत् ।

---

१ "भूयादिति" ग

पूर्णत्व नाम गुण· पूर्णगुणः[1] । ·्याख्यगुण इति यावत् । तच्च पूर्णत्व ज्ञानानन्दा-दिगुणाना प्रत्येकमस्ति । गुणिनोऽपि ्रे पूर्णत्व विशेषतो विद्यते[2] । तदेतत् पूर्णत्वम्, स व भूयान्[1], "यो वै भूमा[2] —" (छन्दो० ७ २३ १ ) इति श्रूयते.[3] । सोऽय भूमा वायुर्वा, आहोस्विद् विष्णुरिति सशय । आशाया भूयस्त्वाद्[4] वायुरित्यन्यमतम् । [3]पूर्णसुखत्वात्, सर्वेभ्योऽपि भूयस्त्वात्, सर्वगतत्वाद्युपपत्तेश्च विष्णुरेव भूमेति सिद्धान्तसार ।

ननु गुणाना गुणान्तरकल्पने तस्यापि[5] तथेत्यनवस्था । तेषा द्रव्यैक्ये च[6] पुनर-गुणत्वमद्रव्यत्व वा स्यात् । अन्यतरमात्रत्वात् । अतोऽन्योन्यभिन्नत्वात् सम्बन्ध

---

1 भूमा पूर्णत्वाख्यगुणो भूयमा धर्मिणा नातिरिक्त इति श्रूयते ।

2 'यो वै भूमा तत् सुखम् । नाल्पे सुखमस्ति । भूमैव सुखम्" इत्यानुपूर्वी ।

3 यस्मात् पूर्णसुख तस्माद् भूमेत्युपनिषत्सु व्याख्यातत्वात् पूर्णसुखत्व पूर्णगुणत्वेन व्याप्यते । तेन व्यापकोक्तेर्व्याप्यो हेतुरपि सूचितो भवत्यविना-भावात् — पूर्णसुखत्वादिति । भूम्नैव पूर्णत्वेनाल्पेभ्य उपर्युपदेशश्चोक्तो भवति । सर्वानपि गच्छतीति सर्वग इति वाऽऽवर्तते । सर्वेषामाश्रयत्वेनोपरि तिष्ठतीति वा सर्वाश्रयपदावृत्ति । एतेन "धर्मोपपत्तेश्च" (१ ३ ९ ) इति च सूत्र व्याख्यातम् । सर्वगतत्वादिधर्मोपपत्तेरिति हि तदर्थ । तदुक्त सर्वग इति । सर्वाश्रय इति वा । अथवा देशत पूर्णतैव सर्वगततेति तदपि सूत्र पूर्णगुण इति व्याख्यातमेव । "स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणत स उत्तरत स एवेद सर्वम्" (छन्दो० ७ २५ १ ) इति सर्वगतत्वश्रुति ।

---

१ "नाम गुण । भूमाख्य" घ.

२ "पूर्णत्व विद्यते" ग

३ "इति श्रूते" ख

४ "आशाभूयस्त्वात्" ख

५ "तस्यापि कल्पने तथे —" ग

६ "द्रव्यत्वे च" ग

एव गुणगुणिनोर्वाच्य इति । मैवम् । सम्बन्धपक्ष एवानवस्थादिदोषदर्शनात्[1] । तस्य स्वनिर्वाहकत्वे द्रव्यस्यैव तथात्व मुकल्पम् । अतोऽस्मत्पक्षे नानवस्था । वस्त्वन्तरत्वानभ्युपगमात् । नच तावता गुणमात्रत्व गुणिमात्रत्व वा कल्पनीयम् । एकस्यैव द्रव्यस्य स्वाभाविकविशेषमात्रेण बहुभावाद्[1] गुणगुण्यादिव्यवहारस्य च सुकरत्वात् । अतो वैशेषिकदोषा नास्माक शङ्क्या इत्यभिप्रायेण[2] गुण-गुणिनोरभेद साधयामास । कुतस्तर्हि पूर्णत्वगुण इति त्वप्रत्यय न चकारेति चेदुच्यते[3] । त्वप्रत्यये कृते गुणस्य द्रव्यभाव एव विहित. स्यात् । न पुनर्गुणस्य च गुणान्तर[2] तदभेदश्चास्तीति द्योतित भवति । अतस्तदपि द्योतयस्त्वप्रत्यय विजहौ । विशेषतो[4] गुणिग्रहणार्थत्वाच्च । "सर्वे सर्वगुण त्मान सर्वकर्तार एव च" (अनु० ३.२.१६८.) इति[5] ह्यनुव्याख्यायाम् । अत· "पूर्णगुणः" इति सुष्ठूक्तम् ॥ ० ॥ २ ॥ ० ॥

---

1 तथाहि तत्त्वदीपिका – "तस्य सम्बन्धस्य ततो भिन्नत्वे गुणवदेव सम्बन्धान्तरापेक्षत्वादनवस्थानात् । अभिन्नत्वे वस्तुमात्रमिति न सम्बन्ध स्यात् । तस्माद् गुणगुणिनोर्भेद भेदाभेदौ वा कल्पयित्वा, तयो सम्बन्ध समवायमन्य वा कल्पयित्वा तदनवस्थापरिहारार्थ तस्य स्वनिर्वाहकत्वकल्पनाद् वरमेकस्य द्रव्यस्य गुणादिविशेषरूपेण स्वनिर्वाहकत्वम्" इति ।

2 एतेन तु प्रयोगविशेषेण गुणभूता अपि ज्ञानानन्दाय पूर्णत्वेन गुणेन गुणिनोऽपि भवन्ति इत्यभिहित भवति । सद्गुणपूर्णस्य च भगवतो विशेषतो विवक्षितत्वात् तदुभयसग्रहाय त्वप्रत्यय विहाय पूर्णगुण इत्येवाऽह ।

---

१ "–भावाद् गुण्यादि–" ग

२ "इत्याशयेन" क

३ "–च्यते । तत्र त्वप्र–" ग घ

४ "गुणग्र–" ग

५ "इत्यनुव्याख्यायाम्" ग

"[1]अक्षर गार्ग्यदृष्टम् –" (बृह० ५.८.११) इत्यत्रादृश्यत्वादिगुणक चित्प्रकृतिः सूर्यादिधारणादित्यत आह – "अक्षरमम्बरान्तधृते." (१.३.१०.) इत्यधिकरणम्। "सोऽक्षरः" इति। य· "यत्तदद्रेश्यम् –" (आथ० १ १.६.)-इति पूर्वोक्तो विष्णु. स [१]एवात्राप्यदृश्यत्वादिगुणकोऽक्षर उच्यते । सूर्याद्यतिरिक्तस्याम्बरान्तस्य धृतिवचनात् । दृश्यत्वादिनिवारणेन स्थूलाणुत्वाद्यपि विष्णोर्निवा[२]रितम् ।। ० ।। ३ ।। ० ।।

1 "तद् वा एतदक्षर गार्ग्यदृष्ट द्रष्ट्रश्रुत श्रोत्रमत मन्त्रविज्ञात विज्ञातृ" इत्यादिना यदक्षरमुच्यत सा चित्प्रकृतिरिति युक्तम् । कुत ? "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" (बृह० ५ ८ ९) इति सूर्यादिधारणवचनात् । कुत इद ज्ञायते यत्सूर्यादिधारण प्रकृतिधर्म इति? श्रुतेरेव । तथाहि मन्त्र – "अह सोममाहनस बिभर्म्यह त्वष्टारमुत पूषण भगम्" (ऋ० १० १२५ २) इति । तेन प्रकृतिरपि स्यादेव प्रतिपाद्या । नेत्याह – सोऽक्षर इति । यस्माददृश्यत्वादिगुणकमाथर्वण्यामुदितमक्षर ब्रह्मैवेति पुरस्तादेव प्रस्तुतम्, तच्चादृश्यत्वादि "अदृष्ट द्रष्टृ –" इत्यादिनाऽत्राप्यभिज्ञायते तेनैव सुशक यत् स एवाक्षरोऽत्रापि निगद्यत इति । अम्बरान्तधृतेरिति हेतुमपि स इति प्रत्यभिज्ञयाऽऽह । तथाहि तत्र श्रूयते – "यस्मिन् द्यौ पृथिवी चान्तरिक्षमोतम्" (आथ० २ २ ५) इति । तदेवात्र प्रत्यभिज्ञायते – "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" (बृह० ५ ८ ११) इति । "सा च प्रशासनात्" (१ ३ ११) इति सूत्रमपि प्रत्यभिज्ञयैव व्याख्यातम् । "येनैष भूतैस्तिष्ठते ह्यन्तरात्मा" (आथ० २ १ ९) इत्युक्त प्रशासनमेवात्राप्यक्षरे "एतस्य वा अक्षरस्य प्रशासने सूर्याचन्द्रमसौ विधृतौ तिष्ठत" (बृह० ५ ८ ९) इति प्रत्यभिज्ञायते हि । नियन्तेति च स्फुट प्रशासनम् । "अन्यभावव्यावृत्तेश्च" (१ ३ १२) इति सूत्रम् । तदपि व्याचख्यौ स प्रत्यभिज्ञात इति । "नित्य विभु सर्वगत सुसूक्ष्मम्" (आथ० १ १ ६) इति यन्महत्त्वमणुत्व चाक्षरस्योक्त तदेवात्रापि "अस्थूलमनणु" (बृह० ५ ८ ८) इति प्रत्यभिज्ञायत इति स एव स ।

१ "स एवादृश्य –" ग

२ "– ष्णोर्निर्धा –" क ख. ग

"[1] सदेव –" (छन्दो० ६ २.१) इत्युपक्रान्त सर्वकारण सत् प्रधानमित्यत आह – "ईक्षतिकर्मव्यपदेशात् स" (१ ३.१३) इति सूत्रम् । "सन्" इति । नात्रोपादान सत् प्रधानमुच्यते । किन्तु? निमित्तमेव सन् विष्णुरेव । ईक्षतिकर्मव्यपदेशात् ॥ ० ॥ ४ ॥ ० ॥

"[2]ब्रह्मपुरे दहरं पुण्डरीक वेश्म –" (छन्दो० ८ १ १) इत्यादौ हृदये तावत् किञ्चिदब्ज श्रूयते । [3]तस्मिश्च स्वल्पो भूताकाश. । उत्तरत्र तु "उभे अस्मिन् द्यावापृथिवी[4].. समाहिते" (छन्दो० ८ १.३) इत्युक्तत्वात् सोऽल्पाकाश सर्वाश्रय इत्यत आह – "दहर उत्तरेभ्य" (१ ३.१४) इत्यधिकरणम् । "हृदब्जग:" इति । न तावद् भूताकाश सर्वाश्रयो युज्यते । "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" (छन्दो० ८ १ १.) इत्येव [१]प्रतिज्ञानात् । एव चेज्जीवस्यापि

1 "सदेव सोम्येदमग्र आसीत्" (छन्दो० ६ २ १) इत्युपक्रान्त सत् "बहु स्या प्रजायेय" (छन्दो० ६ २ ३) इति परिणामश्रवणात् प्रकृतिरिति । नेत्याह 'सन्' इति । सोऽक्षर इति तच्छब्दोऽत्रापि वर्तते । यथाऽक्षर इति न प्रकृति किन्तु स एव तद्वदत्रापि स एव सन् । एतेन स इति सूत्रपदमप्यनुचकार । कुत एतत्? ईक्षतिपूर्व कर्मव्यपदेशात् – "तदैक्षत तत् तेजोऽसृजत" (छन्दो० ६ २ ३) इत्यादि । तदेतदीक्षते सर्वकर्तेति व्याख्यातम् । स इति प्रत्यभिज्ञात च । तथाह्याथर्वणे – "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" (आथ० १ १ ८) इति, "यस्य ज्ञानमय तप" (आथ० १ १ ९) इति च ।

2 "अथ यदिदमस्मिन् ब्रह्मपुरे –" इत्यादि च्छन्दोगाना पाठ । "एतस्मिन् ब्रह्मपुरे –" इत्यादि भाष्योदाहृत शाखान्तरपाठ । तदुभयसग्रहाय "ब्रह्मपुरे दहरम् –" इत्याद्येव पर्यग्रहीत् । तदुक्त तत्त्वदीपिकायाम् – "सर्वत्र च सर्वेषा समानजातीयाना श्रुत्यन्तराणा सहोपलक्षणार्थम् – 'अस्मिन् ब्रह्मपुरे' इत्युदाहर्तव्येऽपि 'एतस्मिन् ब्रह्मपुरे' इत्युदाहृतम्" इति ।

3 "दहरोऽस्मिन्नन्तराकाश" (छन्दो० ८ १ १) इति तस्मिन् स्वल्पो भूताकाश ।

4 "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ" इत्यानुपूर्वी ।

१ "इति प्रतिज्ञानात्" क

प्रस्तावात् स एवायमिति चेन्न । तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् । कस्तर्हि? जीवस्य हृदयाब्जे स्वल्पाकाशगतो महाकाश एव सर्वाश्रय. श्रूयते । कुत ? "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् –" (छन्दो० ८ १.३ ) इत्याद्युक्तेः । स च महाकाशो न पुनर्भूताख्य. । [१]तदसम्भाव्यश्रुतिलिङ्गविरोधात् । क पुनरिति चेत्, उत्तरवाक्यगतरात्मत्वादिस्वगुणैर्विष्णवाख्य एव महाकाशः[२] । सुप्तगम्योऽपि [1]हृदब्जग प्राज्ञनामको विष्णुरेव । धृत्यादिमहिमोपलब्धिश्चास्यैव साधनीया[2] । सोऽय हृदब्जग एव नारायण. श्रुतौ प्रसिद्धश्च[3] ।। ० ।। ५ ।। ० ।।

---

1 एतेन "अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति" इति सुप्तगति "गतिशब्दाभ्या तथाहि दृष्ट लिङ्ग च" (१ ३ १५) इति सूत्रिता च सूचिता भवति । ब्रह्मणो लोक वासस्थान हृदब्जमित्यपि विवक्षणात् । स एव ब्रह्मशब्दोदित इति तच्छ्रुतिद्वारा ब्रह्मशब्दोऽपि सूत्रित स्मारितो भवति । एतेनैव नयेन "अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके" (छन्दो० ८ ५ ३ ) इति दृष्ट लिङ्ग च स्मारित भवति । ब्रह्मलोक इति हृदब्जग इत्यनुवादात् ।

2 एतच्च "सूर्याचन्द्रमसौ विधृत" इति पुरैव प्रत्यभ्यज्ञायीति न पृथग् वक्तव्यम् । तथाच व्याख्यात सूत्रम् – "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धे" (१ ३ १६ ) इति । "स सेतुर्विधृति" (छन्दो० ८ ४ १ ) इति श्रुतौ धृतिवचनम् ।

3 तथाच सूत्रम् – "प्रसिद्धेश्च" (१ ३ १७ ) इति । एतच्च स इत्यावृत्तेन श्रुतिप्रसिद्धिवाचिना भाषितम् । पुरैव सर्वसग्रहश्च कृत आगमोदित इति । 'नारायणश्रुतौ' इति समस्त वा । "तस्या शिखाया मध्ये परमात्मा व्यवस्थित" इति प्रसिद्धेश्च । "इतरपरामर्शात् स इति चेन्नासम्भवात्" (१ ३ १८ ), "उत्तराच्चेदाविर्भूतस्वरूपस्तु" (१ ३ १९ ), "अन्यार्थश्च परामर्श" (१.३ २० ) "अल्पश्रुतेरिति चेत् तदुक्तम्" (१ ३ २१ ) इत्यन्ययोगव्यवच्छेदपरा चतु सूत्री चोपदर्शितयैव दिशा व्याकृता भवितीति स्फुटमेव पटुधियाम् । अपटुधियस्त्वनधिकृता एवेति न बहूच्यते । ग्रन्थगुप्त्यै च ।

---

१ "तदसम्भवश्रुति –" ख     २ "महानाकाश" ग घ

"अनुकृतेस्तस्य च" (१.३ २२) इत्यधिकरणम् । "सूर्यादिभासकः" इति । [1]स एव भगवान् सूर्यसोमाग्न्यादीनां तद्भासां च स्वभासैव भासको भवति । अत स एवानिर्देश्यसुखरूप· ॥ ० ॥ ६ ॥ ० ॥

[2]प्राणोन्नयनादिकृत् सर्वदेवोपास्य. श्रूयमाणो[1] न मुख्यप्राण इत्यत आह – "शब्दादेव प्रमितः" (१.३ २४.) इत्यधिकरणम् । "प्राणप्रेरक." इति । प्राणापानयोर्मुख्यप्राणस्यापि प्रेरको[2] विष्णुरेवेति वामनशब्दादेव प्रमित । सोऽय सर्वेशान· [3]शरीरमध्ये हृदये प्राणोन्नयनादि कुर्वन्नंगुष्ठमात्रस्तिष्ठति । अनगुष्ठवत्सु तिर्यक्षु कथमिति चेत् तद्वता मनुष्याणामेव वेदविद्यायामधिकार[3] इत्यविरोध· ॥ ० ॥ ७ ॥ ० ॥

1 "न तत्र सूर्यो भाति न चन्द्रतारक नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्व तस्य भासा सर्वमिद विभाति" (कठ० ५ १५) इति सूर्यादीना तदायत्तप्रकाशत्वात् स एव सूर्यादिभासक । स एव चानिर्देश्यपूर्णानन्द – "तदेतदिति मन्यन्तेऽनिर्देश्य परम सुखम्" (कठ० ५ १४) इत्युक्त । प्रसिद्धश्च स तादृश स्मृतौ – "यदादित्यगत तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्" (भ०गी० १५ १२) इति । तथाच सूत्रम् – "अपि स्मर्यते" (१ ३ २३) इति ।

2 "ऊर्ध्व प्राणमुन्नयत्यपान प्रत्यगस्यति" (कठ० ५ ३) इति प्राणोन्नयनादिकृत् । "मध्ये वामनमासीन विश्वे देवा उपासते" (कठ० ५ ३) इति सर्वदेवोपास्य । प्राणोन्नयनादि च मुख्यप्राणधर्म इति नाय विष्णु । नैवम् । स वामनशब्देन प्रसिद्ध नारायण एवात्रोच्यत इत्युचितम् ।

3 तथाच सूत्रम् – "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" (१ ३ २५) इति । तदेतत् हृदब्जग इति भाषितम् । "अगुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठति" (कठ० ४ १२) इति श्रुतेरगुष्ठवन्मानुषहृदब्जग इति पर्यवसितोऽर्थ ।

१ "– माणो विष्णुरित्यत –" ग
२ "प्रेरकोऽपि विष्णु –" क
३ "– विद्याधिकार –" क ग

अहो तर्हि देवादिभिर्न वेदैर्ज्ञेयो भगवानिति सर्वदेवोपास्यत्वोक्तिविरोध इत्यत आह – "तदुपर्यपि बादरायण. सम्भवात्" (१.३.२६.) इत्यधिकरणम् । "दैवतैरपि ज्ञेयः" इति । मनुष्यत्वादुपरि देवतापदप्राप्त्यनन्तरमपि तैर्दैवतैर्वेदैर्ज्ञेयो[१] नारायण । तेषामधिकारवैशेष्येण ज्ञानध्यानाद्युपासनसम्भवात् । अपिशब्दाद् गन्धर्वादिभिरपि वेदैर्ज्ञेय । विशिष्टा. स्त्रियस्तिर्यञ्चोऽपि केचिदपिशब्दसगृहीता. । नच देवानामनित्यत्वेऽग्निष्टोमादौ मन्त्रे वा कश्चिद् विरोध । अनेकप्रतिपत्त्याद्यनेकयुक्तिश्रवणात्[1] । नचात्र जैमिनिमतविरोधः । विषयविभागप्रकटनात्[2] ॥ ० ॥ ८ ॥ ० ॥

एव चेन्मनुष्यजातिभि· शूद्राद्यैरपि वेदैर्ज्ञेय. स इत्याशङ्क्याऽह – "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" (१.३.३४) इत्यधिकरणम् । "न वेदैः शूद्राद्यैः" इति । शूद्रशकशबर[3]पुरस्सरै. सर्वथाऽपि न वेदैर्ज्ञेय

1 तथाच सूत्रम् – "विरोध कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" (१ ३ २७) इति । तदेतत् दैवतैरिति बहुवचनोक्तम् । एकैकस्यापि पदस्य एकस्यानन्तरमेक इति बहूनि हि दैवतानि सन्ति । एतेनैव "शब्द इति चेन्नात प्रभवात् प्रत्यक्षानुमानाभ्याम्" (१ ३ २८) "अत एव च नित्यत्वम्" (१ ३ २९), "समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" (१ ३ ३०) इत्यपि सूत्राणि सगृहीतानि भवन्ति ।

2 तथाच सूत्राणि – "मध्वादिष्वसम्भवादनधिकार जैमिनि" (१ ३ ३१), "ज्योतिषि भावाच्च" (१ ३ ३२), "भाव तु बादरायणोऽस्ति हि" (१ ३ ३३) । तमेत विशेषमपिशब्देन सूचयाम्बभूव । ज्ञानिभिरपि प्राप्तफलैरपि देवैरुपास्य फलविशेषभावादित्यादि । ज्ञेयोऽपीज्योऽपीति च । "कर्मण्यप्यधिकारिणो देवा" इति पद्मनाभतीर्था ।

3 शका शबरा इति म्लेच्छविशेष । व्रात्या भूपतय शका । पर्वतीया पुलिन्दादनतिभिन्ना शबराश्चण्डलभेदा । "गोमासभक्षको यस्तु लोकबाह्य च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते" इति तल्लक्षणम् ।

१ "– मपि तैर्वेदैर्ज्ञेयो –" ख

परमात्मा । नहि कुत्रचिच्छूद्रो वेदाधिकारी दृष्टः । पौत्रायणोऽपि कारणान्तरेण[1] शूद्रशब्दोक्तत्वेऽ[१]प्यशूद्र एव हि वेदविद्यामश्रौषीत् । [2]लिङ्गविशेषेणोत्तरत्र क्षत्रियत्वावगमात् । अपिच शूद्रस्य[२] संस्काराभावाभिलापात्, शूद्रत्वाभाव-निर्धारण एव सत्यकामस्योपनयनादिप्रवृत्तेश्च नैव शूद्रो[3] वेदाधिकारी । तस्य [४]वेदश्रवणाध्ययनार्थावधारणाना प्रकटप्रतिषेधात् किमु वक्तव्यम् । [3]सामान्यस्त्रीब्रह्मबन्धूनां संस्कारलेशदर्शनाद् यथोचित एवैष प्रतिषेधो बोद्धव्यः । एवञ्च[५] तैर्गुणकर्मनाम्ना यथायोग्यश्रवणकीर्तनमात्रेणोपास्यो वेत्याकूतम् ॥ ० ॥ ६ ॥ ० ॥

"कम्पनात्" (१.३.३९) इति सूत्रम् । "कम्पकः" इति । "[4] — एजति —"

---

1 शुचाऽऽद्रवणाख्येन कारणान्तरेण ।

2 एदधिकरणहेतवश्च "शूद्राद्यै" इति भाषिता । शुचाऽद्रवणादिभि-र्लिङ्गैरिति । "अयमश्वतरीरथ" (छन्दो० ४ २ २ )इत्युक्तोऽश्वतरी-युक्तो रथ क्षत्रियत्वावगमे लिङ्गविशेष । "गर्दभादश्वाया जाता अश्वतर्य" इति तत्त्वदीपिका । "गर्दभीषु अश्वैर्जाता" इति व्यास-तीर्थीयस्य मूल मृग्यम् । भाष्य आदिशब्दोपात्तान् हेतूनाह — अपिचेत्यादि । तथाच सूत्राणि — "क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्" ( १ ३ ३५ ) "संस्कारपरामर्शात् तदभावाभिलापाच्च" ( १ ३ ३६ ) "तदभाव-निर्धारणे च प्रवृत्ते" ( १ ३ ३७ ) "श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च" ( १ ३ ३८ ) इति ।

3 शूद्राद्यैरित्यादिशब्दस्यार्थान्तरमप्याह — सामान्येत्यादि ।

4 "यदिद जगत् सर्व प्राण एजति निस्सृतम् । महद्भय वज्रमुद्यत य एतद विदुरमृतास्ते भवन्ति" इति कठाना श्रुति । प्राण एजति प्राणाधार सत् कम्पते । चेष्टत इति यावत् । तदेतदाह — कम्पकश्चेष्टक इति ।

---

१ "शूद्रशब्दितोऽप्य —" ग "शूद्रशब्दितत्वेऽप्य —" घ
२ "शूद्रस्य तु संस्कारा —" क. ग ३ "शूद्रोऽधिकारी" क
४ "तस्य श्रवणाध्य —" ग ५ "एवञ्चैतै —" क ग

(कठ० ६.२ ) इति श्रूयमाण कम्पकश्चेष्टको हरिरेव । अत स एवोद्धतवज्रादिहेतिनामा ।। ० ।। १० ।। ० ।।

पौरस्त्य एव ज्योति.शब्दो "ज्योतिर्दर्शनात्" (१.३ ४०.) इति सूत्र व्याख्यातुमलम् । "–हृद्यन्तर्ज्योति पुरुष" (बृह० ६.३ ७ ) इत्यत्रापि ज्योतिर्विष्णुरेव । नतु जीव । तथा [1]दर्शनात्[1] ।। ० ।। ११ ।। ० ।।

"आकाशोऽर्थान्तरत्वादिव्यपदेशात्" (१.३ ४१.) इति सूत्र च तत्रैव "खवत्" इति व्याख्यातम् । "आकाश इति होवाच" (छन्दो० १ ६.१ ) इत्युक्ताकाशो यथा विष्णवाख्यस्तद्वत् "आकाशो वै नाम –" (छन्दो० ८.१४ १ ) इत्यत्रापि विष्णुरेवोच्यते । कुत ? प्राकृतनामरूपवत. प्रसिद्धाकाशादर्थान्तरत्वादिव्यपदेशात्[2] ।। ० ।। १२ ।। ० ।।

"सुषुप्त्युत्क्रान्त्योर्भेदेन" ( १.३.४२ ) इति सूत्रम् । "अन्यश्च जीवतः" इति । "असङ्गो ह्यय पुरुष." (बृह० ६ ३.१५.) इति न जीव उच्यते । "प्राज्ञेनाऽत्मना सम्परिष्वक्तो[2] न .. किञ्चन वेद"[3] (बृह० ६ ३ २१.) इत्यसङ्गाज्जीवस्य भेदव्यपदेशात् । कर्स्तीहि? अज्ञादुच्यमानाज्जीवादन्य· प्राज्ञो हरिरेवासङ्ग । चशब्द केवलभेदमवधारयन् भेदाभेदमत निवारयति ।। ० ।। १३ ।। ० ।।

"एष नित्यो महिमा ब्राह्मणस्य" (बृह० ६ ४ २३.) इत्यत्र विरिञ्चोऽप्युच्यत इत्यत आह – "पत्यादिशब्देभ्य." ( १.३ ४३ ) इति सूत्रम् । "पतित्वादि-

---

1 "विष्णुरेव ज्योति" इति चतुर्वेदशिखाया दर्शनाद् विष्णुरेव ज्योति ।

2 पूर्वोक्तखवदिदमप्यर्थान्तरम् । तथा व्यपदेशात् "आकाशो वैनाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृत स आत्मा" (छन्दो० ८ १४ १ ) इति ।

3 "न बाह्य किञ्चन वेद नान्ऽन्तरम्" इत्यानुपूर्वी ।

---

१ "दर्शनादित्यर्थ" घ २ "प्राज्ञेन परिष्वक्तो –" ख ग घ

गुणैर्युक्तः" इति । [1]सर्वाधिपतित्वं सर्वेशानत्वमग्राह्यत्वमित्यादिगुणैर्युक्तत्वा-न्नित्यमहिमो ब्राह्मणोऽपि विष्णुरेव । "यो ब्रह्माणं विदधाति[2] –" (श्वेताश्व० ६.१८.) इत्यादावनित्यमहिमत्वं विरिञ्चस्यापि श्रुतम् । जन्मराहित्यं च [१]मन्वन्तरकल्पादिष्वेव । नतु परादौ[२] । नच विष्णावप्येवन्त्वं शङ्कयम्[३] । "विष्णोर्नु कम्[3] –" (ऋ० १.१५४.१), "परो मात्रया –" (ऋ० ७.९९.१), "न ते विष्णो –" (ऋ० ७ ९९ २) इत्यादिश्रुतिभ्यः ॥ ० ॥ १४ ॥ ० ॥

पादार्थं निगमयति – "तदन्यत्र च वाचकैः । मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः" इति । अथ भावः – [४]उक्तप्रकारेण [4]रुद्रवाय्वादिविरिञ्च-पर्यन्तेषु[५] प्रसिद्धैर्मुख्यवाच्यः स इति यत् तत् [६] तस्मात् कारणादन्यत्र

---

1 "सर्वस्येशानः सर्वस्याधिपतिः" (बृह० ६ ४ २२), "स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते" (बृह० ६ ४ २२) इत्यादिश्रुतिप्रस्तुतान् गुणानाह – सर्वेत्यादि ।

2 "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्वेताश्वतरोपनिषत् ।

3 "विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि", "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति", "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप" इति बाह्वृचा मन्त्राः ।

4 अधिकरणक्रमेणाऽह – रुद्रवाय्वादिविरिञ्चपर्यन्तेष्विति ।

---

१ "मन्वन्तरादिष्वेव" ग

२ "नतु कल्पादौ" ग

३ " – वप्येवन्त्वं कल्प्यम्" क

४ "भावः – इत्युक्त –" ग

५ "रुद्रवायुविरिञ्चादिपर्यन्तेषु" ग

६ "यत् तस्मात्" क ग.

एतेभ्योऽन्ये [१]ष्वजगजादिघटलोष्टान्तवस्तुषु च वाचकत्वेन लोकसिद्धैर्नामलिङ्गात्मकै सर्वशब्दैश्च जनार्दन एक एव मुख्यतो वाच्य । "तदन्यत्र च वाचकैः" इति विशेषणशब्दस्या [२]न्योऽप्यर्थ. – तत् तस्मिन् विष्णौ अन्यत्र जगति चेत्युभयत्रापि वाचकत्वेन प्रतीयमानैरिति । अथवा, तदन्यत्र तस्माद् [3]विष्णोरन्यत्र जगति [1]समाकर्षादमुख्यतो वाचकैश्चेति । [2]एवञ्चैक एव नारायणः सर्वशब्द [४]मुख्यार्थ इति वचनात् समाधिकराहित्य तस्योक्त स्यात् ।। ०।।०।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
प्रथमाध्यायस्य तृतीय पाद

---

1 एतेनोपरितन समाकर्षाधिकरण कटाक्षयति । तदप्यत्रोपसहारमुखेन सङ्गमयितु शक्यमिति ।

2 वक्ष्यमाणपादार्थं च मनसि निधायोपसहरति – एवञ्चेत्यादि ।

---

१ "एतेभ्योऽन्येष्वजादि –" क

२ " – शब्दस्यान्योऽर्थ " ख ग घ

३ " – विष्णोरन्यत्र समाकर्षा – " क

४ "सर्वमुख्यार्थ इति" क

## ।। प्रथमाध्यायस्य चतुर्थः पादः ।।

ॐ।। अन्यत्रैव प्रसिद्धशब्दैरपि[१] विष्णुरेव मुख्यवाच्य इति साधयत्यस्मिन् पादे ।

"आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" (१ ४ १) इत्यधिकरणम् । "अव्यक्त." इति । "अव्यक्तात् पुरुष पर" (कठ० ३ ११.) इत्यव्यक्तशब्दो (दितो [२] न विष्णु । किन्तु प्रधानमेव) तत्रोच्यते । तस्यैव पुरुषादवरत्वेन तत्प्रतियोगित्वसम्भवात् । नहि स्वस्मादेव स्वयमुत्तम इत्यादि साम्प्रतमिति चेन्न । अन्यदवरयतीत्यवरत्वस्य विष्णोरेव[३] सम्भवात् स एवाव्यक्तशब्देन मुख्यतो गृह्यते[1] । अन्यदमुख्यतयैव[४] । समाकर्षात्, सूक्ष्मत्वादियुक्ते[५] श्रुतेश्च तथा दर्शनात्[2] । नचैकस्यैव धर्मिप्रति-

1 शरीररूपेऽव्यक्ते स्थित एव भगवानव्यक्तशब्देन मुख्यतो गृह्यते ।

2 "तुच्छयेनाऽभ्वपिहित यदासीत् तपसस्तन्महिनाऽजायतैकम्" (ऋ० १० १२९ ३) इति दशममण्डले मन्त्र । "तुच्छमल्प गुणत । परमापेक्षयाऽल्पत्व प्रकृते । आ समन्ताद् भूमात्मकत्वादाभु ब्रह्म । यद् ब्रह्म प्रकृत्याऽपिहितमासीत् तदेव तपसो ज्ञानस्य महत्तया प्रधानमासीत्" इति तत्त्वदीपिकायाम् । एतेन प्रकृत्याऽपिहितत्वादव्यक्तो भगवानिति श्रुतिरेव दर्शयति । सूक्ष्ममेवाव्यक्तमिति साऽपि युक्तिरव्यक्तपदेन निगदिता। तथाहि सूत्रम् "सूक्ष्म तु तदर्हत्वात्" (१ ४ २) इति । "सर्वान्तर्यामको विष्णु सर्वनामा" इति वचनादव्यक्तनियामको विष्णुरेवाव्यक्त इति च भाष्यते । तथाच सूत्रम् – "तदधीनत्वादर्थवत्" (१ ४ ३) इति ।

१ "प्रसिद्धैरपि" क

२ अत्र मूलकोशेषु कियाश्चिद् भागो गलित इति वाक्यार्थपूरणायापेक्षितान्यक्षराणि ( ) आवृतिचिह्नान्तर्गतान्युपक्षिप्तानि । एवमुत्तरत्रापि ।

३ "विष्णावेव" ग

४ "– दमुख्यत एव" ग

५ "सूक्ष्मत्वाद्युक्ते" क

योगित्वं विरुद्धम् । 'अह माम्' इत्यादौ कर्तृकर्मत्ववद् विशेषादेव द्वित्वमात्राद व्यवहारोपपत्तेः[१] । "कृष्णात् पूर्वतनो रामः" इत्यादिवत् । यथा च[२] तयो. पूर्वापरयोरुभयोरप्यनादित्व ब्रह्मत्व चास्ति, एवमेवानयोः परावरयोरुभयोर-प्युत्तमत्व ब्रह्मत्व च युक्तम् । अतो यथा[1] महच्चमसशब्दौ लोकरूढमवरं विहाय श्रुतिसिद्धमर्थान्तरमेव[३] मुख्य ब्रुवाते, प्रयोजनाधिक्यात्, एवमव्यक्तादि-शब्दा. सर्वेऽन्यत्र प्रसिद्धा अपि श्रुतिसिद्ध विष्णुमेव परम ब्रूयुरिति मथि-तार्थ[४] ॥ ० ॥ १ ॥ ० ॥

---

अव्यक्तपदेनैव "अव्यक्तमचल शान्त निष्कळ निष्क्रिय परम् । यो वेद हरिमात्मान स भयादनुमुच्यते" इति पिप्पलादशाखावचमप्येकदेशग्रहणेन स्मारयति । तत्राव्यक्तो हरिरेव ज्ञेय उच्यते नान्यदिति "ज्ञेयत्वावचनाच्च" (१४४) इति सूत्र च विवृतम् । "महत पर ध्रुव निचाय्य" (कठ० ३ १५) इत्यत्रापि विष्णुरेवाव्यक्तो ज्ञेयतयोदित । तदिदमुक्तम् – "वदतीति चेन्न प्राज्ञो हि" (१४५) इति । "सोऽध्वन पारमाप्नोति तद् विष्णो परम पदम्" (कठ० ३ ९) इति विष्णुरेव ह्यव्यक्त इति च प्रकरणे प्रकृत । तदुक्तम् – "प्रकरणात्" (१४६) इति । "अणुरेष धर्म" (कठ० १ २१) इत्यणुत्वेनाव्यक्तस्य परमात्मन एव प्रश्नाच्चात्र विष्णुरेवाव्यक्तपदगदित । तदुक्तम् – "त्रयाणामेव चैवमुपन्यास प्रश्नश्च" (१४७) इति ।

1 अव्यक्तशब्देनेदमपि स्फोरयति – यथा महतो महीयान् भगवानेव मुख्यतो महत्पदार्थ एवमणोरणीयान् स एव मुख्यतोऽव्यक्त इति । अनेनैव न्यायेना-विशेषाद् दृष्टान्तान्तरमप्युपलक्षयति – यथा सोमपात्रे प्रसिद्धोऽपि चमसशब्द श्रुत्या मुख्यत शिरोवाची तद्वदिति । तथाच सूत्रे – "महद्वच्च" (१४८), "चमसवदविशेषात्" (१४९) इति ।

---

१ "व्यवहार उपपन्न ।" ग

२ "तथाच" ग

३ "–मेव ब्रुवाते" ग

४ "मथितोऽर्थ" ख

एव तावदौपनिषदैर्मान्त्रवर्णिकैश्च ज्ञानवाक्यैस्तत्तत्क्रियाकारकपदैश्च विष्णुरेव मुख्यतो वाच्य इत्यायातम् । अथेदानीं ज्ञानैकफलकर्मप्रतिपादकवाक्यैश्च तदेकवाक्यत्वेन मुख्यवाच्य इत्याह – "ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके" (१.४.१०.) इत्यधिकरणम् । "**कर्मवाक्यैश्च वाच्यः**" इति । ज्योतिष्टोमादिकर्मणि सृष्ट्यादौ च प्रसिद्धैर्वसन्तादिभिरन्यैश्च वाक्यैः स एव भगवान् मुख्यतो वाच्यः । तत्साधनाद्यशेषकारकेषु[१] प्रसिद्धैः स्रुक्स्रुवादिपदैश्चेति चशब्दार्थः । [1] वाक्यपदादिगोचरैश्च वाक्याद्यैर्वाच्य इति वा । तथाह्येके तत्तन्नामान्यस्मिन्नेव निरूप्या[२]धीयते । नच तावताऽग्निष्टोमादिव्यवहारासम्भवः । मुख्यामुख्यकल्पनया तदुभयार्थत्वोपदेशात्[2] । तच्चाविरुद्धम् । मध्वादिशब्दवत् । नन्वेवमपि ज्ञानस्य कर्मशेषत्वात् कर्मण एव मुख्यवाच्यत्व तत्रेति चेत्, सत्यम्, अपरविद्याख्ये स्वर्गादिमात्रफले क्षुद्रशास्त्रे । नतु परविद्याख्ये समग्रफले महाशास्त्रे । कर्मण एव ज्ञानार्थत्वात् । अत्रापि स्वानुष्ठेयत्वान्यथानुपपत्त्या कर्मणोऽपि मुख्यत्वमापततीति चेत्, सत्यम्, तथाऽपि तत्साध्यज्ञानसाध्यस्य विष्णोः परममुख्यत्वा-[३] पातादविरोधः ॥ ० ॥ २ ॥ ० ॥

पञ्चदशेत्यादिबहुसङ्ख्यावाक्यैरेक एव कथं वाच्य इत्यत आह – "न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च" (१.४.१२.) इत्यधिकरणम् । "**एकोऽमितात्मकः**" इति । एकस्यैव विष्णोर्बहुसङ्ख्याकाः स्वरूपांशशब्दिता आत्मानः

1 सूक्त वर्गो मन्त्र शब्द प्रकरणमित्याद्यै । नाम धातु क्रियापदमित्याद्यैश्च । अदेडादिभिश्च ।

2 तथाच सूत्रम् – "कल्पनोपदेशाच्च मध्वादिवदविरोधः" (१.४.११) इति । तदेतत् कर्मवाक्यैरिति भाषितमेव । अमुख्यतया कर्मापि वाच्य येषा तानि वाक्यानीति । । कर्मवाच्यैरिति भाष्यपाठे प्रस्फुटोऽर्थः ।

१ "तत्साधनादिषु" घ  २ "निरुच्याधी –" ख

३ " – त्वादविरोध " ग

सन्ति । त एव प्राणचक्षुरादिनामका· [1]"पञ्चपञ्च" (बृह० ६.४.१७) इत्युच्यन्ते । नतु भिन्नार्थाः । तच्च बहुत्व विशेषादेव भवति, नतु भेदादिति ज्ञापयितु "एकः" इति विशेषणम् । सर्वजीवेषु पञ्चधा दशधा चावस्थितत्वादमितात्मक उक्त· । अमित पञ्चजनै· सह न सङ्ख्यात "यस्मिन् –" (बृह० ६.४.१७.) इति तदतिरेकेणैव पठितं रूपान्तरमस्यास्तीत्यप्यमितात्मा [2]। नच तेषु रूपेषु (दु खले) शस्पर्शस्तस्याऽशङ्कच इति सुखैकाश्रयत्वं [१]कशब्दाद् ब्रूते ॥ ० ॥ ३ ॥ ० ॥

मूलकारणभूतस्यावान्तरकारणत्वाभावात् तच्छब्दैर्नोच्यत इत्यत आह – "कारणत्वेन चाऽकाशादिषु यथाव्यपदिष्टोक्तेः" (१.४.१५) इति सूत्रम् । "अवान्तर कारण च" इति । आकाशादिषु संस्थित· परमात्मैवावान्तर च कारणम् । वाय्वादीनामिति शेषः । तथैव श्रुत्युक्तेः[3] ॥ ० ॥ ४ ॥ ० ॥ ५ ॥०॥

1 "यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठित" इत्यानुपूर्वी । प्राणचक्षु श्रोत्रान्नमनआख्यपञ्चजननामा ज्योतिर्नामा इत्याद्येक एवामितात्मक । तथाच सूत्रे – "प्राणादयो वाक्यशेषात्" (१ ४ १३), "ज्योतिषैकेषामसत्यन्ने" (१ ४ १४) इति ।

2 एतेन "अतिरेकाच्च" इति सूत्राशो व्याख्यात । "यस्मिन्निति तेषामधिकरणत्वेन तदतिरिक्तस्वरूपवत्त्वाच्च" इति तत्त्वदीपिकायाम् ।

3 इत समाकर्षाधिकरण पूर्वमेव सूचित तत्तदधिकरणन्यायप्रसङ्गाद् भाषितप्राय च मन्वानो न पृथग् व्याचख्यौ भगवान् भाष्यकार । तथाहि तत्सूत्राणि – "समाकर्षात्" (१ ४ १६), "जगद्वाचित्वात्" (१७), "जीवमुख्यप्राणलिङ्गादिति चेत् तद् व्याख्यातम्" (१८), "अन्यार्थं तु जैमिनि प्रश्नव्याख्यानाभ्यामपि चैवमेके" (१९), "वाक्यान्वयात्" (२०), "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य" (२१), "उत्क्रमिष्यत एवम्भावादित्यौडुलोमि" (२२), "अवस्थितेरिति काशकृत्स्न" (२३) इति । "कर्मवाक्यैश्च", "नियन्ता" इत्यादिना भाष्यवचनेन सर्वाण्यप्येतानि सूत्राणि स्फुटतर व्याख्यातानि मन्तव्यानि । वक्ष्यति च – "अन्यत्र नियतै" इति ।

१ "कशब्दो ब्रूते" ग

पुरुषोत्तमस्य स्त्रीशब्दवाच्यत्व सर्वथा नास्तीत्यत आह – "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्" (१४२४) इत्यधिकरणम् । "प्रकृति·" इति । प्रकृतिर्युवतिरित्यादिस्त्रीशब्दैरपि विष्णुरेव मुख्यत उच्यते । अधिकरण-सूत्रितानेकयुक्तिप्रवाहसामर्थ्यात् । [1]प्रतिज्ञादृष्टान्तानुपरोध·, [2]अभिध्याया प्रकृतित्वस्वरूपत्वोपदेश, [3]साक्षादेव प्रकृतिपुरुषत्वाम्नानम्, [4]प्रकर्षेण करोतीति गुणयोग·, [5]अव्यव[१]धानेनोत्पत्तिद्वारत्वमित्याद्या ह्यधिकरणोक्ता[२] युक्तय ॥ ० ॥ ६ ॥ ० ॥

---

1 पञ्चसूत्रमिदमधिकरणम् । तत्र सूत्रिता युक्तिप्रवाहा क इति? आह – प्रतिज्ञेत्यादि । "हन्तैतमेव पुरुष सर्वाणि नामान्यभिवदन्ति यथा नद्य स्यन्दमाना समुद्रायणा समुद्रमभिविशन्ति" इति प्रतिज्ञादृष्टान्तयो-रनुपरोध एव सत्येव स्यात् । प्रकृति प्रकृतत्वमुपक्रान्तत्वमिति सूचितमेवेद भाष्ये ।

2 "अभिध्योपदेशाच्च" (१४२५) इति सूत्रिता युक्तिमाह – अभिध्याया इति । "प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यते" इति वचनादभिध्याया भगवदिच्छाया प्रकृतित्वम् । "सोऽभिध्या स जूति" इति स्वरूपत्वम् । एतच्च प्रकृतिरित्येव भाषितम् । अभिध्या हि प्रकृतिरुच्यते । भगवानेव च प्रकृति । तेन सा च स एवेति ।

3 "साक्षाच्चोभयाम्नानात्" (१४२६) इति सूत्रयुक्तिमाह – साक्षादेवेति । अत्र भाष्ये प्रकृतिरितिपद "एष पुरुष एष प्रकृति" इत्युभयाम्नानश्रुति स्मारयति ।

4 "आत्मकृते परिणामात्" (१४२७) इति सूत्रयुक्तिमाह – प्रकर्षेणेति । स एव हि योगोपपत्तेर्मुख्यत प्रकृतिरिति । "तस्मात् प्रकृतिस्तस्मात् प्रकृतिरित्याचक्षते" इति भाल्लवेयश्रुते ।

5 "योनिश्च हि गीयते" (१४२८) इति सूत्रकथिता युक्तिमाह – अव्यवधानेनेति । समानार्थक प्रकृतिरिति योनिपदमपि व्यख्यातुमलम् ।

---

१ "अव्यवधानेन चोत्पत्ति –" ख

२ "– अधिकरणयुक्तय" ग "– अधिकरणोक्तयुक्तय" घ

"एतेन सर्वे व्याख्याता व्याख्याता" (१.४.२९) इति सूत्रम्। "शून्यमेव च" इति। अभावधर्मिषु प्रसिद्धैः शून्या[1]दिशब्दैरपि हरिरेव प्रधानवाच्यः। भावार्थस्याप्यभावधर्मसम्भवात्। नच तावता धर्मिण एव शून्यत्वं शङ्क्यमित्यभिप्रायेण पूर्वोक्तलक्षणैः सुसिद्धं भावत्वमेव 'एव' शब्दादवधारयति। चवैतुह्यादिभिर्निपातैश्च वाच्य इति च 'च'शब्दार्थः। ईश्वरस्य त्वीशितव्यसाहित्यं चकारो वक्ति, वैशब्दः श्रुतिप्रसिद्धत्वमित्यादि[2] ॥ ० ॥ ७ ॥ ० ॥

[२]पादार्थं निगमयति—[३]"इत्याद्यन्यत्रनियतैरपि मुख्यतयोदितः। शब्दैः" इति। इत्युक्ता अव्यक्तादिशून्यान्ताः शब्दा आदयो येषां त इत्यादयः। इत्यादिभिर्जनार्दनादन्यत्र जगति नियतैः साक्षादेव वाचका इति लोकतो निश्चितैरपि तत्तच्छब्दैः स भगवानेक एव मुख्यतयोदित[३]। तदेतत् पादोक्तयुक्तिसमुदायेन निश्चीयते ॥ ० ॥ ० ॥ ० ॥

सौत्रस्य द्विर्वचनस्य कृत्यं[3] द्योतयन्नध्यायार्थमपि[४] निगमयति—"अतोऽनन्तगुणो यच्छब्दा योगवृत्तयः" इति। अध्यायोक्तयुक्तिभिः परममुख्यार्थो नारायणः सर्वशब्दानामिति यत्, अतोऽनन्तगुणगणपरिपूर्णमहार्णवः स भगवानिति निश्चीयते। तावता तन्निश्चयः कुत इति चेत्, अनन्तानामपि शब्दराशीनां

---

1 यत भाष्यपद "एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव" इत्यादिश्रुतिगदितसकलोपलक्षणम्। तदर्थमेव श्रुतेराद्य नामाऽदत्त।

2 त्विति जगतो वैलक्षण्यम्, हीति पुन श्रुतिप्रसिद्धिमित्यादि।

3 कृत्यमवधारणरूपम्।

---

१ "शून्यवितानां(?) (नाशा)दिशब्दैः—" क ख घ

२ "पाद निग—" क

३ "—दित। पादोक्त—" ख

४ "—यार्थं निगमयति" ख

तत्तद्गुणयोगादेव तस्मिन् वर्तमानत्वात्[1] । "गुणा· श्रुता·"[2] (सौपर्ण०) इत्यादिश्रुते·[१] ॥ ० ॥ ० ॥ ० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
प्रथमोऽध्याय

---

1 गुणयोगादेव शब्दाना प्रवृत्ति । यत्र गुणयोगोऽधिकस्तत्र ते मुख्या । भगवति निरवधिको गुणयोग इति स एव परममुख्यार्थ सर्वशब्दानामिति ।

2 "गुणा श्रुता सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषा श्रुताश्च नाङ्गैर्हि तथा प्रतीता" इत्यानुपूर्वी । इय चर्ग्वेदे सौपर्णशाखाया श्रूयत इति गीतातात्पर्ये द्वितीये स्थितम् । जाबालखिलश्रुतिरिति गीताभाष्य एकादशे स्थितम् । श्रुत्यैक्य द्वि पाठो वेति सर्वं सुसम्पन्नम् ॥ ० ॥

---

१ "इत्यादिश्रुति" ख.

## ॥ द्वितीयाध्यायः ॥

ॐ॥ प्रथमाध्याये सर्वेश्वरो विष्णुरनन्तशब्दो[१]क्तानन्तगुण साधित. । तत्र सर्वप्रकारविरोधं[1] परिहरत्यस्मिन्नध्याये । प्रथमपादे युक्तिविरोधम्[२] ।

युक्त्युपजीव्यस्मृतिविरोध परिहरन् "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" (२ १.१) इत्यधिकरण व्याख्याति – "**श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः । निषेध्दुं शक्नुयुः**" इति । पाशुपतादिस्मृतयो रुद्रादीना सार्वज्ञ्यादिगुणविधितत्परास्तदन्येषा तान् निषेधन्तीति[३] चेत् ता अपि हरेर्गुणान् निषेध्दुं न शक्नुयुः । श्रुत्यनुसारिणीभिर्व्यासादिस्मृतिभिर्विरुद्धत्वात् । प्रत्युत व्यासादिस्मृतय एव रुद्रादिगुणान्[2] निषेधन्ति[४] । श्रुतिविरोधात् तासामेवाऽभासत्वोपपत्ते.[५] ।

---

1 अलौकिकेऽर्थे प्रत्यक्षस्याप्रसराद् द्विविधस्तावदत्र विरोध शक्यप्रसर । अनुमानेन च, आगमेन च । स चैकैकोऽपि पुनर्द्वेधा भवति । केवलेनानुमानेन, अनुमानप्रचुरेण च समयप्रतिकर्मणेति प्रथम । केवलया श्रुत्या, युक्तिसहमत्या चेति द्वितीय । सोऽय सर्वोऽपि प्रकारश्चतुर्भि पादैर्निरस्यते । तत्र प्रथमतो युक्तिविरोध । तत्रापि प्रथमत आगममूलतया प्रतीयमाना अपि काश्चन स्मृतयोऽनुमानकशेरुका एवेत्यावेदयितु प्रथमतो युक्त्युपजीव्यस्मृतिविरोध परिह्रियते ।

2 रुद्रादीना सार्वज्ञ्यादिगुणान् ।

---

१ "–शब्दोक्तोऽनन्त –" क.

२ "– विरोध परिहरति ।" ग

३ "निषेधयन्तीति" क

४ "निषेधयन्ति" क

५ "–पत्ते । तासु श्रुतफल –" घ

किञ्च, तासु स्मृतिषु [1]श्रुतफलसम्बन्धिन्यव्यभिचारित्वबुद्धिश्चात्र श्रौतस्मृति-रुक्ता[१]। तद्विरुद्धत्व नाम तामूक्तफलव्यभिचारित्वम्। तेन च तासामप्रामाण्यमेव सुसाधम्। अतो नेष्टानिष्टविधिनिषेधस्तासामस्ति। उपजीव्यविरोध।दाभा-सत्वसम्मते।

"एतेन योगः प्रत्युक्त." (२.१.३.) इति सूत्रार्थोऽप्येवं[2] व्याख्यात.॥०॥ १॥०॥

वेदानामप्युक्तफलव्यभिचारदर्शनादमानत्व समानमित्यत आह – "न विलक्षण-त्वादस्य तथात्व च शब्दात्" (२.१ ४.) इत्यधिकरणम्। "**वेदा नित्यत्वान्मान-मुत्तमम्**" इति। नचेतरस्मृतिवद् वेदानाममानत्वम्। ताभ्यो[२] विलक्षणत्वात्। नह्यत्र फलोपलब्धिरेव प्रामाण्यस्थापिका। किन्तु? अज्ञानमूलत्वादिदोष-राहित्यमेव। तच्च "नित्यत्वात्" इत्युक्त्याऽर्थात् सिद्धम्। नित्यत्वं च शब्दादेव प्रतीयते। अतो वेदा प्रमाणमेव भवन्ति। शब्दादिष्वनुप्रमाणेषु वेदप्रमाणस्य प्रत्यक्षानुमानाभ्यामाधिक्यविवक्षया "उत्तमम्" इति विशेषणम्। यथार्थज्ञानस्य केवलाख्यस्य ततोऽप्युत्तमत्वात्। अथवा, इतिहासादिश्रौतस्मृत्याख्याः पौरुषेय-वेदा अर्थैकनित्यत्वान्मानम्। ऋगाद्याः केवलवेदा. शब्दार्थोभयनित्यत्वादुत्तमं मानमिति विशेषः।

---

1 श्रुत यत् फलम्। तत्सम्बन्धिनी श्रौती या स्मृतिर्ज्ञानम्। "स्मृति स्मरण-धीच्छासु" इत्यभिधानात् पूर्वकालसम्वन्धप्रहाणेन ज्ञानमात्रमपि स्मृति-पदेनोच्यते। विशिष्टे विशेष्यमात्रग्रहणस्य करिकलभादिषु बहुलमुप-लम्भात्। तथाच स्मृतिबोधितफलस्य प्रत्यक्षतो व्यभिचारदर्शनेन विरोधान्न प्रामाण्यम्। तथाच सूत्रम् – "इतरेषा चानुपलब्धे" (२ १ २) इति। तदेतदाह – किञ्चेत्यादि।

2 फलव्यभिचारदर्शनादेव।

---

१ "– रुक्ता। अतस्तस्या प्रत्यक्षविरुद्धत्व च श्रौतस्मृतिविरुद्धत्वम्। दृष्ट-फलव्यभिचार इति यावत्। तेन च तासामाभासत्वादिष्टानिष्टविधि-निषेधयोराभासत्वमेव स्यात्। एतेन योग –" क ख.

२ "तेभ्यो विल –" क

नच वेदोक्तफलव्यभिचारः । अधिकारतो दर्शनात्[1] । स्वत एव वेदनाद् वेदा[१] इति तत्प्रामाण्यं च स्वत[२] एवेत्यावेदितम् ।। ० ।। २ ।। ० ।।

ननु "आपोऽब्रुवन्" (शत०ब्रा० १.१.३.) इत्यादिवचनमचेतनाना[3] वक्तृत्व वक्ति । तच्च, आपो[४] वक्त्र्यो न भवन्ति, अचेतनत्वादित्यादियुक्तिविरुद्धम् । तस्माद् वेदवचोऽपि क्वचिदयुक्तार्थवादित्वा[५]दमानमित्यत आह – "अभिमानि-व्यपदेशस्तु विशेषानुगतिभ्याम्" (२ १ ६) इत्यधिकरणम् । "देवतावचना-न्नाऽपो वदन्तीत्यादिना वचः। नायुक्तवादि" इति । तत्र ह्यभिमन्यमाना अचेतनरूपा आपो न वदन्तीत्युच्यन्ते[2] । कुत ? तदभिमानिदेवतावचनात् । अस्य[६] पदस्यार्था उच्यन्ते[७] – देवतावक्तृक हि तद्वचनम्, देवतानामेव वक्तृत्वमिति हि विद्वद्वचनम्, देवताविषयं ह्याबादिशब्दैर्मुख्यतो वचनमित्यादिना विषयविभाग-न्यायेन निरूप्यमाणे सति [८]युक्तार्थवादित्वावगमाद् वेदवचो नायुक्तार्थं वक्ति । उक्तप्रकारेण निर्दोषत्वात् । "ग्रावाणः प्लवन्ते" (        ) इत्यादावप्येवमेव द्रष्टव्यम्[3] ।। ० ।। ३ ।। ० ।।

---

1 तथाच सूत्रम् – "दृश्यते तु" (२.१ ५) इति । इदमपि नित्यत्वादित्युदित-प्रायम् । अधिकारे सति फलस्य नित्यत्वान्नियतत्वादिति । "नित्य नियतमेव च" इति ह्यभिदधति ।

2 वदन्तीति नोच्यन्त इत्यन्वय । किन्त्वभिमानिदेवता एव वदन्तीत्युच्यन्ते ।

3 "दृश्यते च" इति द्वितीयसूत्रमपि देवतावचनादिति व्याख्यातम् । क्रीडा-व्यवहारादिशक्तिमतीना देवतानामेव वेदेषु वचनात् । तासा च वचन-सामर्थ्यदर्शनात् ।

---

१ "वेद इति" ख
२ "स्वत इत्यावे –" क ख घ
३ "– मचेतनानामपि वक्तृत्वम्" ग
४ "आपो न वक्त्र्य , अचे –" क
५ "– वाचित्वा –" ग
६ "तस्य" ग
७ "– स्यार्थ उच्यते ।" ख
८ "उक्तार्थं –" क

"असदेवेदमग्र आसीत्" (छन्दो० ३ १९ १) इत्यादावसत् कारणमुच्यते । प्रळये तावत् कार्यस्यासत्त्वात् कारणमप्यसद् भवितुमर्हति वस्तुत्वादित्यत[१] आह – "असदिति चेन्न प्रतिषेधमात्रत्वात्" (२.१ ८.) इत्यधिकरणम् । "असन्नैव कारणं दृश्यते क्वचित्" इति । नैव क्वचिद् देशे काले चासत् कारण वेदैर्दृश्यते । नापि प्रत्यक्षेणानुमानेन वा । विपर्ययदर्शनात् । असत् कारणं न भवति, असत्त्वात्[1], वन्ध्यापुत्रवदित्यादिना निषिद्ध च । विमतं नासत्कारणकम्, कार्यत्वात्[२], घटवदिति वा । नह्यसत्कारणक किञ्चित् कार्यं क्वापि दृष्टम् । [2]नचात्यन्तासन्मनोमात्रमपि कुर्वद् दृष्टम् । नच युक्तम् । चेतनत्वेन[३] भावत्व-प्रसङ्गात्[3] ।

तर्ह्यमनस्कमेवासत् कारणमस्तु । नो चेत् जीव प्रधान वा भवतु । तेषामपि

1 पूर्ववादिनोऽभिमत्न विमतमकारणम्, असत्वात् प्रतिषेधमात्रत्वात्, धर्म्यात्मनाऽभावत्वनैयत्यात् । "धर्मिणोऽभावरूपत्व मात्रशब्देन विविक्षितम्" इति हि तत्त्वदीपिका । अत्र तु तत्त्वदीपिकादिरीत्या अत्यन्ता-सदेव कारणत्वेन पूर्वपक्षितम् । चन्द्रिकादौ तु प्रागभावो ह्यसदिति व्यवक्ष्यत । "सर्वधर्मरहितत्वस्यासद्वादिनाऽभ्युपगमात्" इति सन्याय-रत्नावळी चात्रात्यन्तासदेव कारणत्वेन पूर्वपक्षयति।

2 अत एव च "तदसदेव सन्मनोऽकुरुत" इति श्रुति मनसि कुर्वन्नाह – नचात्यन्तासदित्यादि ।

3 "नैव दृश्यत" इति वदता भगवता श्रुतिमूलत्वविरहात् परपक्षप्रापिता सर्वा अपि यक्तय श्रुतिविरोधभग्नसक्थय सर्वथाऽनुत्थानमेवार्हन्तीति पराकृतप्राया एव । तथाच सूत्राणि– "अपीतौ तद्वत् प्रसङ्गादसमञ्जसम्" (२ १ ९), "नतु दृष्टान्तभावात्" (२ १ १०), "स्वपक्षदोषाच्च" (२ १ ११), "तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्ष-प्रसङ्ग" (२ १ १२) इति । अत्र "नासतोऽदृष्टत्वात्" (२ २ २६) इत्युत्तरपादीयमप्यधिकरण "नैव दृश्यत" इति स्फुट कटाक्षितम् ।

१ "वस्तुत्वात् घटवदित्यत –" ख  २ "कार्यत्वादिति वा" ग

३ "चेतनत्वे भावत्व –" क

युक्तेः। "अकस्माद्धीदमाविरासीत्"¹ (      ) इत्यादेर्जगदाकस्मिकसत्त्वम्,[1] सत्त्वात्, ब्रह्मवत्। "जीवाद् भवन्ति भूतानि" (      ) इत्यादेर्जीवकर्तृकम्, कार्यत्वात्, घटवत्। "प्रधानादिदमुत्पन्नम्" (      ) इत्यादेरचेतनकर्तृकम्, अचेतनत्वात्, दध्यादिवदित्याद्याः शिष्टापरिग्रहा अप्यत्र निराकृताः[2]। तथाच भाष्यार्था उच्यन्ते — अमनस्कमप्यसन्नैव कारणं प्रमाणैर्दृश्यते। "य सदोषः[3] —" (काषायण०) इत्यादिश्रुतेर्जीवस्तु सदोषत्वादसन्नित्युच्यते। सोऽपि नैव स्वतः कारण ज्ञायते। अस्वातन्त्र्यानुभवात्। अचेतनमपि² नीचत्वेन निन्द्यत्वादसदिति गदितम्। तच्च जगतो निमित्तकारण न श्रूयते। यच्च पुनस्तैस्तैरीदृशमुत्प्रेक्ष्य-³ माण नानावस्तु तच्च असदभद्रम्। नह्यज्ञ⁴प्रलपित कारणमिति विद्वद्बुद्धौ

---

1 न कस्मादपि कारणाद् यस्य सत्त्वम्। किन्तु? स्वत एव।

2 तथाच सूत्रम् — "एतेन शिष्टापरिग्रहा अपि व्याख्याता" (२ १ १३) तथाह्यत्र भाष्योदाहृता श्रुतय — "अकस्माद्धीदमाविरासीदकस्मात् तिष्ठत्यकस्माल्लयमभ्युपैति" इति, "प्रधानादिदमुत्पन्न प्रधानमधितिष्ठति। प्रधाने लयमभ्येति नह्यन्यत् कारण मतम्" इति, "जीवाद् भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चला। जीवे तु लयमृच्छन्ति न जीवात् कारण परम्" इति च।

3 "अथ य सदोष साञ्जन सजनि स जीव" इत्यानुपूर्वी। "स्वपक्ष-दोषाच्च" (२ १ ३०) इति सूत्रभाष्ये समुद्धृता श्रुतिरियम्।

---

१ "— रासीदकस्मात् तिष्ठति" इत्या —" ख.

२ "अचेतनोऽपि" क ख

३ "पुनस्तैस्तैरुत्प्रेक्ष्य — " क

४ "नह्यसत्प्रल — " ग.

प्रतीयते । पूर्ववादोक्तहेतवश्च[१] सर्वे कालात्ययापदिष्टा. । प्रतिसाधन च प्रत्येक समस्ति । असदादिकमजगत्कारणम्, अस्वेच्छाधीनत्वात्[२], जीवप्रधानादिवदित्यादि[३] । अपिच, [४]विमतम्नाकस्मिकसत्त्वम्, कार्यत्वात्, घटादिवत्; विमतमजीवकर्तृकम्,[५] घटाद्यतिरिक्तकार्यत्वात्, दु खविशेषवत्, विमत [६]नाचेतनमुख्यकर्तृकम्, अतन्निमित्तकत्वात्, इच्छादिवदित्यादिक च प्रतिसाधन बोद्धव्यम् । श्रुत्यादिमूलत्वात् ।

[1]एव चेदसदादिश्रुतीनां का गतिरित्यत आह – **"असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि"** इति । असदादिवादिभिरुपन्यस्तश्रुतिषु पठ्यमाना असज्जीवप्रधानादिशब्दाः सर्वेऽपि विष्ण्वाख्यमेकं ब्रह्मैव कारणत्वेन वदन्ति । अपर तैरुत्प्रेक्षितमसदादिक कारणत्वेन न वदन्ति । सर्वमानविरोधोक्तेः । तथाऽपि क्वचिदविरोधे मुख्यार्थानन्तरममुख्यमपि लोकरूढं यथायोग्यधर्मेण वदन्ति । तदेतत् "कारणत्वेन" इति विशेषणसामर्थ्यादवगम्यते । [2]अकिशब्दस्त्वसच्छब्दग्रहणाद् गृहीत. । आदिशब्दात् – "कर्मैव देह दैविकं मानुषं वा –" (      ) इत्यादिवाक्यगताः कर्मादिशब्दाश्च ब्रह्मैव परमं कारण वदन्ति । अन्यस्यामुख्यत्वात् ॥ ० ॥ ४ ॥ ० ॥

---

1 असज्जीवेत्यादिभाष्येण पूर्वाध्यायोक्त विस्मृत्य पृच्छतस्तदेव स्फोरयतीत्याह – एवमित्यादि ।

2 "अक , न कोऽपि, सर्वतो विलक्षण इत्यर्थ " इति तत्त्वदीपिका ।

---

१ "हेतवश्च काला –" क.

२ "अस्वेच्छानियतत्वात्" ग.

३ " – प्रधानवदित्यादि" ग.

४ "विमतमनाकस्मिक सत्, कार्यत्वात्, पटादिवत्; विमतम्" ग

५ न जीवकर्तृकम्" ग

६ "विमतमनचेतन – " घ.

"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" (२.१ १४ ) इति सूत्रम् । "**पूर्णगुण** " इति । सुखदु.खादिभोक्तुर्जीवस्य स्वातन्त्र्यादिगुणराहित्यादेव हि कारणत्व निषिद्धम् । परस्यापि तदेकीभावोक्ते. कारणत्वासम्भव इति चेत्, न । स्थानाद्य-भेदवचनेऽपि लोकवत् स्वरूपभेदोपपत्ते· । अत· सृष्टयादिषु कारणभूतै· स्वातन्त्र्यसार्वज्ञयादिभिः स्रष्टृत्वादिभिश्च प्रत्येकमपि पूर्णैर्गुणैः पूर्णतमो नारायण इति न तत्कारणत्वे कश्चिद् विरोधः ॥ ० ॥ ५ ॥ ० ॥

"तदनन्यत्वमारम्भणशब्दादिभ्य." (२.१.१५.) इत्यधिकरणम् । "**हरि.**" इति । यद्यपि तत्तत्प्रवर्तन[१] स्वातन्त्र्यसार्वज्ञयादिप्रकृष्टगुणविशिष्ट एव सृष्टयादौ निमित्तमिष्ट. । तथाऽपि तत्तत्कार्यकरत्वाद्य[२] नन्याधीनगुणयुङ्ग नानासाधनमेव तन्निर्वाहकमिति न मन्तव्यम् । किन्तु? तत्तत्कार्यकरत्वाद्यगणितगुणगणपरि-पूर्णत्वेन निर्वाहकोऽपि हरिरेव सुश्रुत[1] । अतन्नियतस्य द्रव्यादे. साधनस्य सर्वत्रानुपलम्यत्वात् ॥ ० ॥ ६ ॥ ० ॥

---

1 एतेन पूर्णगुण इत्यत्राप्यावर्तनीयम् । स्वातन्त्र्यादिगुणपूर्ण इति । "परतन्त्रो ह्यपेक्षेत स्वतन्त्र किमपेक्षते" इति ह्युक्तम् । हरिरिति विशेष्यपदेनैतामपि श्रुति स्मारयति – "असत्यमाहुर्जगदेतदज्ञा शक्ति हरेर्ये न विदु परा हि" इति । तथाच हरिरेवेति सावधारणत्वादस्य तदन्यसाधानाभाव "भावे चोपलब्धे" (२ १ १६ ) इति सूत्रित सूचितो भवति । हरिरिति च श्रुतिस्फोरणेन तदधीनसाधनसद्भावसूचनात् "सत्त्वाच्चावरस्य" (२ १ १७ ) इति च गदिताशयम् । "नासदासीत्" इति च पूर्णगुणोऽन्यो नास्ती-त्युच्यते । पारतन्त्र्यादितरसाधनानाम् । तथाच सूत्रम् – "असद्व्यपदेशा-न्नेति चेन्न धर्मान्तरेण वाक्यशेषात्" (२ १ १८ ) इति । एव "युक्ते शब्दान्तराच्च" (२ १ १९ ), "पटवच्च" (२ १ २० ), "यथा प्राणादि" (२ १ २१ ) इत्यवशिष्टान्यप्यधिकरणसूत्राण्यनयैव दिशा सुतरामनु-सन्धेयानीति न बहु व्याघुष्यते ।

---

१ "– प्रवर्तमान –" क "– प्रवर्तके स्वा –" ख

२ "– करत्वादनन्या –" क

नन्वेवमपि जीवस्य स्वतः कर्तृत्वं स्वानुभवसिद्धमित्यत आह – "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" (२ १ २२.), "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" (२ १.२७) इत्यधिकरणे[1] । "स्वातन्त्र्यात्" इति । हरिरेव जीवेऽपि सर्वस्वातन्त्र्यात् तद्गतकार्योपसहरणादिगुणैः सुपूर्णः, निरंशत्वेऽप्येकदेशप्रवृत्ति-[१] करत्वाद्याश्चर्यगुणपूर्णश्च । जीवस्य तु स्वहिताकरणादिदोषैरस्वातन्त्र्यदर्शनादकर्तृत्वम्[2] ॥ ० ॥ ७ ॥ ८ ॥ ० ॥

ईश्वरस्यापि[२] सृष्टयादौ प्रयोजनाभावादकर्तृत्वमित्यत आह – "न प्रयोजनवत्त्वात्" (२.१.३३) इत्यधिकरणम् । "सर्वकर्तृत्वात्" इति । अल्पकर्तृणा हि लोके स्वप्रयोजनपरत्वात् तदभावे कर्तृत्वासम्भवः । आप्तकामतयाऽनिच्छो.

---

1 अत्रैव हृषीकेशतीर्थादिसम्मत प्राचीनपाठक्रम । "इतरव्यपदेशात् –" इत्यादि "देवादिवदपि लोके" (२ १ २६) इत्यन्त पञ्चसूत्री एकमधिकरणम् । "कृत्स्नप्रसक्ति –" इत्यादि "विकरणत्वान्नेति चेत् तदुक्तम्" (२ १ ३२) इत्यन्त षट् सूत्राण्यपरमिति द्वे अधिकरणे । इतरव्यपदेशादित्येकमेव सूत्रमेकमधिकरणम् । अपरे च द्वे अधिकरणे इति तत्रैव विवक्षाभेदेन पक्षान्तरम् । प्राचीनानामय पन्था । ततोऽर्वाचीनैर्जयतीर्थादिभिस्त्वन्यथाऽप्यधिकरणमारचितम् । आनन्दमालाकृत्तु प्रतनमेव पन्थानमनुपपातेति स्फुटम् ।

2 अत्र "स्वातन्त्र्यात् पूर्णगुणो हरि" इति वक्तव्यम् । तथाच सूत्रम् "अधिक तु भेदनिर्देशात्" (२ १ २३) इति । स्वातन्त्र्यादेव कर्तृत्वमिति वदता जीवस्य तद्विपर्ययोऽपि कथित एव । तत्रापि सूत्रम् – "अश्मादिवच्च तदनुपपत्ति" (१ १ २४) इति । "उपसहारदर्शनान्नेति चेत् क्षीरवद्धि" (२ १ २५) इति च । "देवादिवदपि लोके" (२ १ २६) इति च

---

१ "– देशवृत्ति –" क.

२ "ईशस्यापि" क ख घ

प्रयोजनाभावेऽपि कर्तृत्वमविरुद्धम् । अतदर्थत्वात् । आप्तकामत्वे च[१]कुत· कर्तृत्वं सुवचमिति चेत्, सुखोद्रेकनिमित्तादेव सर्वप्रवर्तनकर्तृत्वात्[1] ॥ ० ॥ ६ ॥

"वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति"[2] (२ १·३५ ) इत्यधिकरणार्थश्चैतेनैव[२] सुगृहीत· । तथाहि – नच सर्वकर्तृत्वे वैषम्यादिदोषो विष्णोः शङ्क्यः । गुणदोषादेरपि सर्वस्य स्वयमेव कर्तृत्वात् । नह्यात्मनि दोषापादनेच्छा कस्यचिद्[३] भवति ॥ ० ॥ १० ॥ ० ॥

---

"दृश्यत्वाद्युज्झित ", "पूर्णगुण " इत्यादिना बहुशो व्याख्यातम् । अथ द्वितीयाधिकरणे "श्रुतेस्तु शब्दमूलत्वात्" (२ १ २८ ), "आत्मनि चैव विचित्राश्च हि" (२ १ २९ ), "स्वपक्षदोषाच्च" (२ १ ३० ), "सर्वोपेता च तद्दर्शनात्" (२ १ ३१ ), "विकरणत्वान्नेति चेत् तदुक्तम्" (२ १ ३२ ) इत्येतानि च सूत्राणि "पूर्णगुण " इति व्याख्यातानि । विरुद्धतया प्रतीयमानैरपि विचित्रै जीवेऽसम्भावितै सर्वैरप्यपाणिपादत्वादिभि गुणै पूर्ण इति सर्वोपसग्रहात् ।

1 तथाच सूत्रम् – "लोकवत्तु लीलाकैवल्यम्" (२ १ ३४ ) इति ।

2 "वैषम्यनैर्घृण्ये न सापेक्षत्वात् –" इति सूत्रमारभ्य आपादान्त पठितानि – "न कर्माविभागादिति चेन्नानादित्वात्"(२ १ ३६ ), "उपपद्यते चाप्युपलभ्यते च" (२ १ ३७ ), "सर्वधर्मोपपत्तेश्च" (२ १ ३८ ) इत्यन्तानि चत्वारि सूत्राण्येकमधिकरणमिति प्राचीनाना मतमनुसृत्येदमुदितम् । अन्त्यमेक सूत्र पथगधिकरणमिति तु जयतीर्थादय । अधिकरणार्थ स्फुट ।

---

१ "–कामत्वेन कुत " ग.

२ "–णार्थश्च तेनैव" क ख

३ "कस्यापि सम्भवति" ग.

पादार्थं निगमयति – "नायुक्त तद् वदेच्छ्रुति" इति । उक्तमार्गेण निरूप्यमाणे सति युक्तियुक्तार्थवादिनी श्रुतिरिति यत् तत् तस्मादयुक्तार्थं सा न वदेत् । अतो ये ते विष्णो. श्रुत्युदितानन्तगुणा. प्रथमाध्यायसाधितास्तेषां न कश्चिद् युक्तिविरोध इत्यर्थ ॥ ० ॥ ० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
द्वितीयाध्यायस्य प्रथम पाद

---

## ।। द्वितीयाध्यायस्य द्वितीय पादः ।।

ॐ।। [1]नारायणपरायणस्य स्वसमयस्य परसमयविरोधमाशङ्क्य परिहरत्यस्मिन् पादे ।

"रचनानुपपत्तेश्च नाऽनुमानम्" (२ २.१.) इत्यारम्य[१] "उत्पत्त्यसम्भवात्" (२.२.४२.) इत्यन्तानि पादाधिकरणानि व्याख्याति – "**भ्रान्तिमूलतया सर्वसमयानामयुक्तितः । न तद्विरोधाद् वचनं वैदिकं शङ्कयतां व्रजेत्**" इति । साङ्ख्यपूर्वकाः शाक्तेयपर्यन्ताः परकीयसमया सर्वेऽपि भ्रान्तिमूलतया वर्तन्ते । यतो न युक्तिमूलाः श्रुतिमूला[२] वा लक्ष्यन्ते । अतस्तद्विरोधेऽपि

---

1 द्वितीयपादे तावदयमधिकरणक्रम । निरीश्वर साङ्ख्य विन्ध्यमूल प्रथमाधिकरणेन निरस्यते। सेश्वरस्तु पतञ्जलिमूल द्वितीयेन। साङ्ख्यत्वसाम्येनोपस्थापिते सेश्वरे निरस्ते निरीश्वरत्वसाम्येनोपस्थापितो लोकायतस्तृतीयेन निरासि । पुनरपि द्वाभ्या चतुर्थपञ्चमाभ्या साङ्ख्यावेव द्विविधौ, पुरुषोपसर्जनप्रकृतिकर्तृत्ववादी, प्रकृत्युपसर्जनपुरुषकर्तृत्ववादी चेति । ततश्च वैशेषिकसमय षष्ठेन। ततश्चतुर्विधेषु बौद्धेषु वैभाषिका सौत्रान्तिकाश्च सप्तमेन, माध्यमिका अष्टमेन, वैज्ञानिका नवमेन क्रमादपास्ता. । दशमेन चाधिकरणेन स्याद्वादी जैन प्रत्यक्षेपि । पाशुपत शाक्तश्चैकादशद्वादशाभ्यामिति । तदेव द्वादशस्वधिकरणेषु निरूपितयुक्तिनिकुरम्बै. श्रुतिकदम्बसावलम्बै साङ्ख्यादिशाक्तेयान्तसर्वसमयावनामयुक्तितो वैदिकवचनाना प्रामाण्य निराबाधमिति सर्वपादसारमत्राऽऽचार्यपाद श्लोके सञ्जग्रन्थेत्याह – नारायणेत्यादिना ।

---

१ "– रम्य "असम्भवात्" इत्यन्तानि" क ख

२ "– मूला लक्ष्यन्ते" क ख

वदगत वेदानुकूल स्मृतिगत वा वचनं प्रमाणविरुद्धमिति न शङ्कचम्[1] । तेषामनुमाभासत्वेन प्रामाण्यानुपपत्तेः । वैदिकवचनस्योत्तममानत्वोक्त्या च तदन्तरविरोधाभावोऽवसीयते ॥ ० ॥ १-१२ ॥ ० ॥ ० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
द्वितीयाध्यायस्य द्वितीय पाद

---

१ "शङ्कचम् । आभास —" क.

## ॥ द्वितीयाऽध्यायस्य तृतीयः पादः ॥

ॐ॥ जीवजडजनार्दनेषु[1] श्रुतीना परस्परविरोधं परिहरत्यस्मिन् पादे । स्वसमयेऽपि पूर्वापरार्थविरोधस्य परिहरणीयत्वात् ।

"न वियदश्रुतेः"[2] (२.३ १.), "एतेन मातरिश्वा व्याख्यातः" (२.३ ८.), "तेजोऽतस्तथा ह्याह" (२.३.१०.), "आप" (२.३ ११), "पृथिव्यधिकार-रूपशब्दान्तरादिभ्यः" (२.३.१२.), "ज्ञोऽत एव" (२.३.१८) इत्येतानि तत्तद्वस्तूत्पत्त्यधिकरणानि व्याख्याति – **"आकाशादि समस्त च तज्जम्"** इति । [3]अव्याकृतव्याकृताकाशा[१]दिकं[२] समस्तमपि पुरस्तात् प्रस्तुताद् विष्णोरेव[३] जातम् । सूक्ष्मत्वेन प्रकाशमानाः प्रकृतिपुरुषकालवेदाश्चा[4]ऽकाश-

---

1 अल्पाच्तरत्वाज्जीवजडयोस्तयोरभ्यर्हितत्वाच्च जीवस्य पूर्वनिर्देश ।

2 "न वियत् –" इत्यादीनि सप्त सूत्राणि प्रथममधिकरणम् । "एतेन –" इत्येक द्वितीयम् । "तेजोऽत –" इत्येक चतुर्थम् । "आप' इत्येक पञ्चमम् । "पृथिवी –" इत्याद्येक षष्ठम् । "ज्ञोऽत एव" इत्येक दशमम् । एतान्यत्र व्याख्यायन्ते । तृतीय सप्तमाष्टमनवमानि चोपरितनभाष्येणानुपदमेव ।

3 एतेनानुत्पत्तिवचनानामव्याकृताकाशविषयत्वमिति न्यायविवरणमपि प्रौढिवादेन प्रवृत्तमित्युदित भवति । "पराधीनविशेषवत्त्वमात्रविषयत्व चेति व्यवस्था" इति तत्रैव स्फुटवचनात् ।

4 तदभिमानिनो देवाश्च । तथाह्यनुव्याख्यानम् – "प्रकृति पुरुष कालो (देवा) वेदास्तदभिमानिन । महदाद्याश्च जायन्ते" (२ ३ ६) इति । "प्रकृति पुरुष कालस्त्रय एते विभागत । चतुर्थस्तु महान् प्रोक्त पञ्च-

---

१ "अव्याकृताकाशा –" ग

२ "– दि समस्त –" ख

३ "विष्णोर्जातिम" क

शब्देन यथायोग संगृह्यन्ते । आदिशब्देन महदाद्या वाय्वाद्याश्चोच्यन्ते । सर्वेषामपि पराधीनविशेषाख्योत्पत्तिसम्भवात् । अत एवाऽऽकाशाद्यभिमानि-देवताश्चाऽऽकाशादिशब्दैर्गृहीताः ।

नच नित्यत्वान्यथानुपपत्त्याऽनुत्पत्तिमत्त्व प्रकृत्यादेः शङ्क्यम् । सर्वसृष्टिप्रतिज्ञा-न्यथानुपपत्त्या नित्यस्यापि नारायणाद् विवक्षितविशेषावाप्तिमात्रेण[१] जननं श्रुतम्, अविशेषादिति[२] वक्तुम् "समस्त च" इति विशेषणम्[1] । चशब्दाद् भौतिक च तत एव[३] जातम् ॥०॥ १ ॥ २ ॥०॥ ४ ॥ ५ ॥ ६ ॥०॥१०॥०॥

"तदभिध्यानादेव तु तल्लिङ्गात् सः" (२.३ १३), [2]"विपर्ययेण तु क्रमोऽत उपपद्यते च" (२.३.१४.) इत्यधिकरणे । "तेनैव लीयते" इति । यतो विष्णोरे-

माऽहङ्कृतिर्मता । तद्विभागेन जायन्त आकाशाद्या पृथक् पृथक्" (२ ३ ७) इति च भाष्ये । "प्रकृति पुरुष काल इति श्रीभूदुर्गा "इति तत्त्वदीपिका ।

1 समस्त च तज्जमिति "इद सर्वमसृजत" इति श्रुतिमर्थतो गृह्णाति । तेन तस्या श्रुतौ श्रुताया सर्वसृष्टिप्रतिज्ञाया हानि "प्रतिज्ञाहानिरव्यतिरेका-च्छब्देभ्य" (२ ३ ६) इति सूत्राभिप्रेताऽपि व्याख्याता भवति । एतेन "अस्ति तु" (२ ३ २), "गौण्यसम्भवात्" (२ ३ ३), "शब्दाच्च" (२ ३ ४), "स्याच्चैकस्य ब्रह्मशब्दवत्" (२ ३ ५), "यावद्विकार तु विभागो लोकवत्" (२ ३ ७) इत्यवशिष्टान्यपि प्रथमाधिकरणसूत्राणि यथासम्भव सूचितार्थानि ।

2 "तदभिध्यानादेव –" इत्येक सूत्र सप्तममधिकरणम् । "विपर्ययेण –" इत्यादि त्रीणि सूत्राण्यष्टममधिकरणम् । अय भाष्यपक्ष । न्यायविवरण-पक्षे तु "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्" (२ ३ १५), "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भाव-भावित्वात्" (२.३ १६) इति द्वे सूत्रे अधिकरणान्तरम् । तदनुसारेण च टीकान्तरप्रवृत्ति ।

१ "– वाप्तिजननम्" क २ "अविगेधादिति" – घ

३ "एव जातम्" क ख घ.

तत्[१] समस्तं जातमित्युक्त तेनैव भगवता तल्लीयते, तस्मिन्नेव चेति शेषः । नान्येन । तेनैव तु[२] हरिणाऽनादिरपि ससारो लीयते । किमु सादिरित्यर्थ. । सोऽयं लयक्रमः सृष्टिक्रमाद् विपर्ययेण भवति । तथाहि – यच्छाखागतवाक्येन "इद क्रमादुत्पद्यते –[1]" (भाल्लवेय०) इत्युक्तं तेनैव तद्गतवाक्येनैव व्युत्क्रमाल्लीयत इत्युच्यते शाखान्तरानन्वेषणेऽपि ॥ ० ॥ ७ ॥ ८ ॥ ० ॥

आकाशादिवदीशस्यापि केनचिदुत्पत्तिलयौ [3]स्यातामित्यत आह – [2]"असम्भवस्तु सतोऽनुपपत्तेः" (२.३ ६.), "नाऽत्मा(ऽ)श्रुतेर्नित्यत्वाच्च ताभ्य." (२.३.१७.) इत्यधिकरणे। **"सोऽनुत्पत्तिलयः"** इति । स सर्वेश्वरो विष्णु. सर्वथाऽप्युत्पत्तिलयवर्जित. । सर्वप्रकारेणाप्यसम्भवात् । तथाहि[3] – न तावद् दध्यादिवदीश्वरस्य पूर्वशब्दविलोपलक्षणं जन्माभ्युपगन्तुं पार्यते । तद्वदनिवर्त्यान्यथाभावस्याभावात् । सर्वदा सर्वरूपेषु सर्वशब्दवाच्यत्वाच्च । नच

---

1 "अत एव हि परादिद क्रमादुत्पद्यते क्रमाद् विलीयते" इति भाल्लवयशाखावचनमिति भाष्ये स्थितम् । तेनैव तच्छाखागतेनैव वाक्येन व्युत्क्रमाल्लीयते । तथाहि तद्वचनम् – "कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च । य क्रमाद् व्युत्क्रमाच्चैव स हरि पर उच्यते" इति । व्युत्क्रमोऽपि हि क्रम एव ।

2 "असम्भव –" इति सूत्र तृतीयमधिकरणम् । "नाऽत्मा –" इति नवमम् । तथाचाऽदित दशाप्यधिकरणानि सगृहीतानि भवन्ति ।

3 तदेतत् सर्वमवगम्यते भगवत्पादवचनेनैव – "पूर्वशब्दविलोपश्च यदि जन्म –" (अनु० २ ३.२१ ), "पराधीनविशेषाप्तिरनिवर्त्यान्यथाभव । क्षीरादिवद् विकार स्यात्" (१ ४ ५६ ), "साक्षाद् भूतस्य चोद्भव" (१ १ २०६ ), "विकार एव जनन पुरुषे तद्विशेषणम्" (भा० २ ३ ९ ) इत्यादिना ।

---

१ "विष्णोरेव तत्" क.

२ "हि" ख. घ

३ "स्याताम् – "असम्भवस्तु – " ख

भूताद्यनित्यत्ववत् साक्षादुद्भव । अप्राकृतत्वात्, नित्यत्वाच्च । नापि प्रधानवत् परिणाम. । वस्त्वन्तरोत्पत्तावनुपादानत्वात्, निमित्तत्वात्, चेतनत्वाच्च । नच जीववद् विकारवस्त्वभिमान. । नित्यमुक्तत्वात् । अस्तु तर्हि रमावत् पराधीनः कश्चिद् विशेष , नित्यमुक्तत्वेऽपि तत्सम्भवादिति चेत्, मैवम् । पूणस्वातन्त्र्यात्, सर्वनियन्तृत्वा (च्च । न ता[1]) वदस्वाधीन किञ्चित् कर्मादिकमुत्पत्त्यादौ कारणं समस्ति निमित्तमुपादान वा । तत्र प्रमाणाभावात् । पुण्यादेः प्रकृत्यादेश्च भगवान् स्वयमेव हि साक्षान्निमित्तम् ।

नच विष्णोरुत्पत्तिलयोक्ति कुत्रचिदाशङ्कनीया । तत्र हि "अजायमानो बहुधा विजायते[२]" (तै० आ० ३. १३.), "तमसि निलीन[1]. व्युत्तिष्ठते –" ( ) इत्यादिना पराधीनविशेष[३]लक्षणेन [४]जन्मना पराश्रयप्रवेशलक्षणेन[५] लयेन च विनैव सर्वैश्वर्य[६]लक्षणया स्वेच्छया यदाकदाचिल्लोकदृष्टयपेक्षयाऽऽविर्भावतिरोभावावेव तस्योच्येते । "अजायमान" इति जन्मप्रतिषेधात् । "व्युत्तिष्ठते" नहि[७] लीयत इत्यर्थाल्लयप्रतिषेधाच्च । युज्यते तस्य स्तम्भादिवाऽविर्भावो[८] लोकजन्मविलक्षणः, तथैव तादृशस्तिरोभावश्च । अधिकशक्तित्वात् । तस्मात् "सोऽनुत्पत्तिलय." इति सुष्ठूक्तम् ।। ० ।। ३ ।। ० ।।६।।०।।

---

1 "स इद सर्वं विलाप्यान्तस्तमसि निलीनस्तद् विलाप्य व्युत्तिष्ठते स इद सर्व विसृजति विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव" इति श्रुतिरिति भाष्ये स्थितम् ।

---

१ अत्र कोशेष्वक्षराणि गलितानि यथायोग सयोजितानि ।
२ "अजायमानो विजायते" घ
३ " – विशेषत्वलक्षणेन" ख घ
४ " – लक्षणजन्मना" ग
५ " – प्रवेशविशेषत्वलक्षणेन" क घ , " – प्रवेशत्वलक्षणेन" ख
६ "स्वैश्वर्य – " क
७ "नहि विली – " ग
८ "स्तम्भादाविर्भावो – " ग

'कर्ता शास्त्रार्थवत्त्वात्" (२.३.३२.) इत्यधिकरणम्[1]। "कर्ता जीवस्तद्वशगः सदा" इति । शास्त्रे तावद् धर्माधर्मयोर्विधिः प्रतिषेधश्च श्रूयते । नच तयो· कर्तारं संसारिणमधिकारिणमन्तरेण[1] तत् सा (²धीय स्यात् । तस्माज्जीवोऽपि कर्ता । नच तावता विष्णोरेव सर्वकर्तृत्ववचनविरोध शङ्कयेन । यतो जीवस्तस्य विष्णोर्वशग सन्नेव कर्ता । नच ससार एव तथा । "स्त्रीभिर्वा—" (छन्दो० ८ १२ ३ ) इत्यादिना सदा मुक्तावपि तद्वश सन्नेव सर्वान् भोगान् गच्छति प्राप्नोतीत्युक्ते । लोकेऽपि प्रत्यक्षत एव प्रश्नश्चनादिप्रवृत्तये परस्वाद्युपगमदर्शनात्, "आत्मानमेव लोकमुपासीत" (बृह० ३ ४ १५ ) इति श्रुतौ दर्शनाच्च तद्दत्त कर्तृत्व जीवेऽप्यस्तीति । अत एव च तस्य शक्तिविपर्ययसमाध्यभावौ युज्येते । परवशत्वात् । यथा च तक्षजीव कारयितृवशग कर्ता च लक्ष्यते तथा सर्वोऽपि जीवो भगवद्वश कर्तेति युक्तम् । "न सन्ति यदुपेक्षया" (पैङ्गि०) इत्यादे । तत्प्रेरकत्वस्य च जीवकृतप्रयत्नापेक्षत्वान्न कोऽपि दोष ॥ ० ॥ १६ ॥ ० ॥

"उत्क्रान्तिगत्यागतीनाम्" (२.३ १९.), "व्यतिरेको गन्धवत् तथाच दर्शयति" (२ ३ २६ ), "अदृष्टानियमात्" (२ ३ ५० ) इत्यधिकरणान्यप्यनेनैव भाष्यवाक्येन मुखतोऽर्थतश्च व्याख्यातानि वेदितव्यानि । तथाहि — "स एतेनैव

---

१ ऐकचत्वारिंश दशसूत्रमेकमधिकरणम् । तथाच सूत्राणि — "विहारोपदेशात्" (२ ३ ३३ ), "उपादानात्" (२ ३ ३४ ), "व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्यय" (२ ३ ३५ ), "उपलब्धिवदनियम" (२ ३ ३६ ), "शक्तिविपर्ययात्" (२ ३ ३७ ), "समाध्यभावाच्च" (२.३ ३८ ), "यथा च तक्षोभयथा" (२ ३ ३९ ), "परात्तु तच्छ्रुते" (२ ३ ४० ), "कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्य" (२ ३. ४१ ) इति ।

---

१ "ससारिणमन्तरेण" ख

२ इत परम् ( ) एतच्चिह्नान्तर्गत सर्वोऽप्यश सर्वत्रापि कोशेषु लुप्त । अध्येतॄणा मध्येग्रन्थमध्ययनभङ्गो मा भूदिति तदनुसारेण कानिचन वाक्यान्यत्र ग्रथितानि सन्ति ।

स्वात्मना –" (पौष्यायण०) इत्यादिना जीव परमात्मवश एवेमम् च लोक गच्छति कर्म च कुरुत इत्यणुरेव। नहि व्याप्तस्य गमनागमने श्रूयमाणे सम्भवत । सोऽय यद्वशग स परमात्मैव हि व्याप्तोऽभिधीयते । "जीव प्राणधारणे" इति धातुपाठात्, प्राणस्य च हृदयसद्मतया जीववपदेनैव हृदि स्थितत्वोक्तेरवस्थिति-वैशेष्यात् चन्दनवदालोकवच्च प्रकाशव्याप्तिरपि भाषितैव। "त यथा यथेश्वर प्रकुरुते" (शाण्डिल्य०) इति श्रुतेस्तद्वशगा ग्वाशिनो जीवादशा पृथग् गच्छन्ति गन्धवदिति व्यतिरेकोऽपि व्याख्यात । नच प्रतिबिम्बवैचित्र्ये कारणाभाव । तदधीन एव प्रतिविम्व स्वाविद्याकर्मादिवैचित्र्याद् वैचित्र्य गच्छतीत्युपपत्ते ।। ।। ० ।। ११ ।। १२ ।। ० ।। १८ ।। ० ।।

"पृथगुपदेशात्" (२ ३ २७) इत्यधिकरण तु "अन्यश्च जीवत " इति पूर्वमेव स्फुट व्याख्यातम् । अत्रापि तद्वशग इति कटाक्षयति ।। ० ।। १३ ।। ० ।।

"अशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" (२ ३ ४२) इत्यधिकरणम् । तत्र प्रथमतो जीवस्वरूपनिर्णायकानि "आभास एवच" (२ ३ ४९) इत्यादीनि सूत्राणि व्याख्याति – "**तदाभासः**" इति । तत्प्रतिविम्व-त्वाच्च नेश्वराभेदो जीवस्य । नच तावता "ब्रह्म दाशा " (  ) इत्यादि-विरोध । यतस्तादृशा अभेदव्यवहारास्तदशत्वमेव भेदगर्भमनुमोदन्ते । "पृथ-गुपदेशात्" (२ ३ ३७) इति स्फुटवचनात् । प्रतिविम्बभूतान् दाशादीन् प्रति बिम्बत्व हि नामैक्य तत्र) **विहितम्, स्वातन्त्र्याद्यैक्यं**[१] **वा । तस्मात् तदपि भेद एव प्रमाणम् ।**

**नन्वनयोर्भेद इति धर्मस्यैकत्वं धर्मिद्वित्व पर्यनुयुंक्ते**[1] **। नह्येकधर्मेण धर्मित्व-मुभयोः साम्प्रतम् । तस्मादैक्यमेव जीवेशयोरिति । मैवम् । तत्र ह्येकवचनस्य समुदायार्थत्वाद् धर्मद्वयेनैव भेदिनावुदितौ ।** [2]**उपवीतिनाविवितिवत्**[२] **।**

---

1 पर्यनुयोग आक्षेप ।

2 उपवीतमस्त्यनयोरिति हि विगृह्यते । नह्येकेनैवोपवीतेनोभावप्युपवीतिनौ । जात्याख्यान हि तत् । "जात्याख्यायामेकस्मिन् बहुवचनम् –" (१ २

---

१ स्वातन्त्र्यादैक्यम्" क

२ " – वत् । व्यावहारिक " क, " – वत् । तत्र व्यावहारिक " ग

तर्हि व्यावहारिकः प्रातिभासिकश्चेति भेदद्वयमभिधीयते[१] नापरमिति चेत्; किमेतत् बाध्यम्, आहोस्विदबाध्यम्? आद्ये[२] नासीन्नास्ति न भविष्यतीति ज्ञानगम्यत्वात् सूत्रोदितभेदस्य प्रतिषेधो नाम दोषः प्रसज्येत । नायं दोषः पूर्वमतत्वादस्येति चेत्, किं तर्ह्यस्य प्रतिषेधकम्? उत्तरसूत्रमिति चेत्, तस्यापि तदुत्तर तथेत्यनवस्था[1] विपर्ययो वा किं न स्यात्? नहि यत्किञ्चिद् विवेचकमस्ति । पूर्वपक्षसूत्राणा सिद्धान्तसूत्र निषेधकमित्येव ब्रूम इति चेत्, तदप्यचारु । नह्येकमपि सूत्रं [2]समग्र[३] पूर्वमतानुवादपरं ब्रह्मसूत्रेष्वस्ति । किमुत बहूनि ।

---

५८ ) इति पाणिनिसूत्रे बहुवचनमिति न वक्तव्यम् । द्वयोश्च वचन भवति । जात्याख्यायामेकवचने द्विवचने च द्वयोर्बहूना च वचन भवतीत्येतावद् वक्तव्यम् । अत एव स्तनौ स्त्रीणामिति च युक्तम् ।

1 अनवस्थेत्यव्यवस्था । सर्वसूत्राणामुत्तरोत्तर प्रतिषेधात् सर्वोऽपि सूत्रार्थं पूर्वमतम्, असूत्रित च यत्किञ्चित् सिद्धान्त इति महतीयमव्यवस्थाया काष्ठा । अथवा सर्वसूत्राणामेव प्रतिषेधे सिद्धान्तस्यानवस्थानमेव स्यादिति व्याख्येयम् । तत्त्वदीपिकाकृदप्याह – "नच विवेचकमनालोच्य पूर्वोत्तरमतभेदकल्पना विपश्चिता चेतसि चमत्कारमाविष्करोति । नचातिसरम्भेण पूर्वपक्षीकृतमप्रतिवचनेन निरसितु शक्यते । नचोत्सूत्र सिद्धान्तप्रतिपादनमिति वाच्यम् । असूत्रितस्यासिद्धान्तत्वात् । सूत्रेषु निरस्यपक्षोपन्यास उत्सूत्र चोत्प्रेक्षणीयस्तत्रतत्र सिद्धान्त सूत्रविरुद्ध इति न सज्जनसमाजे भ्राजते" (पृ० २५४ ) इति । "सूत्रेषु येषु सर्वेऽपि निर्णया समुदीरिता " इति च भाष्ये स्कान्दवचनम् । "निर्णयायैव यत् प्रोक्त ब्रह्मसूत्र तु विष्णुना । व्यासरूपेण तद् ग्राह्य तत्रोक्ता सर्वनिर्णया । तस्मात् सूत्रार्थमागृह्य कर्तव्य सर्वनिर्णय " इति चानुव्याख्याने भविष्यत्पर्ववचनम् ।

2 "असदिति चेन्न –" (२ १ ८ ) इत्यादावशत पूर्वमतानुवाददर्शनात् समग्रमित्याह । तदेव विव्रियते यत्रक्वचिद् यै कैश्चित् पदविशेषैरिति ।

---

१ " – मभिधीयेत" ख

२ "आद्ये नास्ति नाऽसीन्न भवि – " ग

३ "समग्रपूर्वमता – " क

प्रत्येकमपि सिद्धान्तपरत्वात् । पूर्वमतानुवादस्तु यत्रक्वचित् यै कैश्चित् पदविशेषैरेव सुकरः । अतो नात्र सूत्र सूत्रान्तर प्रतिषेधति । नच जीवेशयोरभेदः कुत्रापि सूत्रित । अत. सूत्रितभेदस्य पूर्वमतत्वासम्भवाद् बाध्यत्वाङ्गीकारो न सञ्जाघटीति । उक्तदोषप्रसङ्गात् । चरमे जीवादीशस्य, ईशाज्जीवस्येति भेदद्वयं पारमार्थिकमेव तेनाप्यङ्गीकृतमिति किं नश्छिन्नम्?

अपिच, जीवजडप्रतियोगिक ईशभेद., ईशजडप्रतियोगिको जीवभेद , जीवेशप्रतियोगिको जडभेद', पुनश्च जीवानामन्योन्यप्रतियोगिकः, जडानाञ्च तादृशः, एव पञ्चविधो भेद. "पृथक् –" इति सूत्रितोऽत्राप्यभिप्रेयते । "अन्यश्च जीवतः" इति विस्पष्टोक्तेरेवात्र पुनर्मुखतोऽनुक्ति' । तत्रेशभेद[१]वाचकोऽन्यशब्दश्चतुर्विधसमुच्चयार्थश्चशब्दः ।[1]

कुतस्तर्हि सोऽय भेदो भाष्ये[२]न पञ्चधा प्रपञ्चित इति चेत्, प्रपञ्चित एव हि मुखतोऽर्थतो वा तत्रापि । तथाहि – [2]"भिन्नोऽचिन्त्य" इतीशभेद[३] । "भिन्न

1 जीवजडप्रतियोगिकस्येशभेदस्य वाचकोऽन्यशब्द । ननु अन्यश्च जीवत इति श्रूयते? श्रूयताम् । कि हीनम्? ननु प्रतिज्ञैव हीना । का हि सा या किलाहीयत? जीवजडप्रतियोगिकस्येत्येषा । कथम्? जीवत इति जीवप्रतियोगिकस्यैवेशभेदस्य बोधात् । अबोधोऽयम् । यतश्चकारोऽपि श्रूयते जीवतश्च जडतश्चान्य इति । ननु चकारो गत । क्व भो? चतुर्विधभेदसमुच्चये । नहि गत एव । तत्रापि गत । अत्राप्यस्ति । नन्वय देहल्या दीपो निक्षिप्त । अन्यश्चेत्याह । तेन चतुर्विध भेद समुच्चिनोति । जीवतश्चेत्याह । तेन जड च समुच्चिनोति । सोऽय चकारस्य स्वभाव , यदय विचिन्वन् समुच्चिनोति ययमिह समुच्चिनुयामहमिति ।

2 तथाहि भाष्यम् (२ ३ २८) – "भिन्नोऽचिन्त्य परमो जीवसङ्घात् पूर्ण परो जीवसङ्घो ह्यपूर्ण । यतस्त्वसौ नित्यमुक्तो ह्यय च बन्धान्मोक्ष तत एवाभिवाञ्छेदिति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीव" इति ।

१ "तत्र भेद –" ग

२ "भाष्ये पञ्चधा न प्रप –" ख

३ " – तीशभेद । "जीवसङ्घा –" ग.

एव जीव'' इति जीवभेदः । "जीवसङ्घात्" इति मिथस्तद्भेद. । 'बन्धात्" इति व्यधिकरणोक्तेर्बन्धकजडभेदस्यार्थादवगम. । बन्धकस्य लिङ्गशरीरस्य प्रतिचेतन विद्यमानत्वाज्जडानामन्योन्यभेदश्चार्थात् सिद्ध. । नहि पूर्वापरकालेषु मुच्यमानाना तदातदा भज्यमान लिङ्गशरीरमेकमेवेति समञ्जसम् । नच भाष्याख्यशास्त्रे तात्पर्यार्थो नैतावानस्तीति शङ्कचम् । तदेकदेशसम्बद्धे प्रकरणे[1] श्रुतिमुखत एव भेदपञ्चकस्योपन्यस्तत्वात् । तस्मादत्यर्थविस्तरे भाष्याख्ये महाशास्त्रे प्रपञ्चितोऽय भेदप्रपञ्चः सत्य एव सम्मत. सन्नत्रापि सगृह्यत इत्यनवद्यम् ।

जगद्भेदस्य सत्यत्वेऽपि धर्मत्वात् फलश्यामत्ववद् विनाशसिद्धचा रक्तत्ववदभेदः कुतो न भविष्यतीति चेत्, भेदस्यैव क्रमुकत्वादिवद् यावदाश्रयभावित्वादविनाशसिद्धे. । तथाऽप्याश्रयनाशे नाश. स्यादिति चेत्, सत्यमनित्याश्रयाणां क्रमुकत्वादीनाम् । नित्याश्रयस्य भेदस्य ब्रह्मत्वादिवदविनाश एवेति नेष्टहानि. ।

ननु ब्रह्मव्यतिरिक्तस्योत्पत्तिलयोक्तेर्जीवजडभेदस्याऽश्रयनाशाद् ब्रह्मभेदस्य प्रतियोगिनाशादिति सर्वभेदविनाशाद् ब्रह्मैकवस्त्ववशेषः स्वयमेव सिद्धचतीति च माऽतिशङ्कि । जीवजडयोरपि यावद्ब्रह्मभावित्वेन नित्यत्वात् । तथाहि – अनाद्यनन्तकालीनं हि ब्रह्म सम्प्रतिपन्नम् । तद् यदा यस्मिन् काले तिष्ठति जीवोऽपि तदा सर्वदाऽप्याभासत एव । स्वयम्प्रकाशमानस्तिष्ठति नित्यस्वरूप इत्यर्थः[2] । नच जीवनाशो यत्रक्वापि श्रुत सूत्रितो वा । "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" (भ०गी० २ २४.) इति विपर्ययश्रवणात् । नित्यत्वेऽपि जीवस्य स्वदेहसंयोगवियोगाख्ये जन्ममृती युज्येते, श्रूयेते च ।

---

1 तत्त्वनिर्णयाख्ये ।

2 तथाच सूत्रम् – "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" (२ ३ २९ ) इति । चतुर्दश चेदमधिकरणमेकसूत्रम् । "नित्य परो नित्यो जीवोऽनित्यास्तस्य धातवोऽत उत्पद्यते च म्रियते च विमुच्यते च" इति च श्रुतिरेतमर्थमुपस्थापयति । "जीवो नित्यो धातुरस्य त्वनित्य " इति च भारते । एतेन भाष्ये 'तदा आभास ' इत्यपि विग्रहण विवक्षित भवति ।

जडप्रकृतेरपि नित्यत्वमवगम्यते । "सत्त्वाच्चावरस्य" (२.१.१७), "अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्" (२ १.८), "नतु दृष्टान्तभावात्" (२.१.१०.) इत्यादिसूत्रश्रुतिस्मृतियुक्तिसामर्थ्याद् विकृतिसकृतिभ्यां स्थूलत्वसूक्ष्मत्वापत्ती एव जन्ममरण (शब्दिते१ ।) अतो न ब्रह्ममात्रावशेष कदाचिच्छङ्कयः । "नच नाश प्रयात्येष नचासौ भ्रान्तिकल्पित." ( ) इति भेदपञ्चकस्य सुस्थैर्य (मेव२ हि स्थिरीक्रियते। ननु कथं तर्हि पूर्वमनानन्दादिरूप पश्चादानन्दरूपो भवति । स्वरूपधर्मिणा यावदाश्रयभावित्वादिति? उच्यते । नहि पूर्वम-) विद्यमान सुखादिस्वरूप पश्चादुत्पद्यते । किं तर्हि? यो जीव पूर्वं यद्रूपाभास आसीत् सुखादिरूपो दु.खादिरूपो मिश्ररूपो वा स तु पश्चात् स्वसाधनपरिपाके तद्रूप एवाभिव्यज्यते३ । यथैव बाल्ये पुरुष स्त्रीरूपो वा वर्तमान सन् यौवनेऽपि तद्रूप एवाभिव्यज्यते तथैव स्वमोक्षेऽपि सम्भवात्[1] ।। ० ।।

[2]अंशाधिकरणशेष पर्यवसाययन्४ "प्रकाशादिवन्नैव पर" (२ ३ ४५.) इत्यादीनि सूत्राणि व्याख्याति – "हरिः सर्वरूपेष्वपि समः सदा" इति । [3]हर्यंशाना

1 तथाच पञ्चदशाधिकरणे द्विसूत्रे सूत्रे – "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" (२ ३ ३०), "नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा" (२ ३ ३१) इति ।

2 अंशाधिकरणे सप्तदशे तावदष्टौ सूत्राणि । तत्र "अंशो नाना –" (२ ३ ४२), "मन्त्रवर्णात्" (२ ३ ४३), "अपि स्मर्यते" (२ ३ ४४), "आभास एव च" इति चत्वारि सम्प्रति सगृह्य भाषितानि । अवशिष्टानीदानी व्याख्याति ।

3 तथाच सूत्रे – "अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्" (२ ३ ४७) इति, "असन्ततेश्चाव्यतिकर" (२ ३ ४८) इति च ।

१ ( ) आवृत्यन्तर्गतानि कोशेषु गलिततया लुप्तान्यक्षराणि ।
२ ( ) एतावान् भाग कोशे लुप्त ।
३ " – व्यज्यते तथैव मोक्षेऽपि" क " – व्यज्यते तथैव स्वमोक्षेऽपि" ग
४ "पर्यवसाय प्रकाशादि – " क

जीवानां तदधीनत्वात् तदनुग्राह्यत्वादिकं युक्तम्[१] । तदशोऽपि मत्स्यादिः परो न जीवसम इति मन्तव्यम् । किन्तु मत्स्यादिरूपी हरि कूर्मादिषु मूलरूपे च समः, मूलरूपी च हरिर्मत्स्यादिषु सम इत्येव[२] वेदितव्यम् । तच्च साम्य नाम स्वातन्त्र्याद्यशेषगुणोन्नद्धनिर्दोषैकरूपत्वेनैव स्थितिः । नतु सादृश्यमात्रम् । तथा सति तैः सम इत्येव वक्तव्यत्वात् । नच मत्स्यादिरूपेण द्वैधीभावकाले पुनरेकीभावकाले वा कदाचिदपि पारतन्त्र्यादिवैशिष्ट्येन विषमः शङ्क्योऽयमिति सदाकालं सम इत्युक्तम् । यथाच [1]हरिः सूर्यः अक्षिमानिनां भिन्नांशानामनुग्राहकोऽपि स्वमण्डलप्रकाशमानिषु[३] स्वरूपांशेषु सम[४] एक एव, तथैवोपपत्तेः ॥ ॥ ० ॥ १४ ॥ १५ ॥ ० ॥ १७ ॥ ० ॥

पादार्थनिगमनार्थश्चाय सदाशब्दः । यदेतत् पादोक्त जगतो जन्मादि, विष्णोरनुत्पत्त्यादि, जीवस्येशाधीनकर्तृत्वादि, तयोः पृथक्त्वादि चेति तत् तावत् केषुचिदेव पराख्यकालेषु तथा भवतु, न सर्वेष्विति मा भूच्छङ्का । अतीतानागतानन्तपरपरम्पराख्यकालेषु[५] सर्वदाऽपि तथैव तद् भवति, नान्यथेत्यर्थः ॥०॥०॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
द्वितीयाध्यायस्य तृतीय पाद

---

1 हरिरिति सूर्यस्यापि नाम भवति । तेन "ज्योतिरादिवत्" इति सूत्रखण्डव्याख्यानपरतया भाष्य सङ्गमयति – हरि सूर्य इत्यादि । एतेन "प्रकाशादिवन्नैव पर" (२ ३ ४५), "स्मरन्ति च" (२ ३ ४६) इति सूत्रे अपि गदिताभिप्राये । "भास्वान् विवस्वान हरि" इत्यभिधानम् ।

---

१ "–दिक ह्यु क्तम्" ख घ
२ "इति वेदि–" क
३ "प्रकाशाभिमानिषु" ग
४ "स एक एव" ग
५ "काले सर्व" क ख घ

## ॥ द्वितीयाध्यायस्य चतुर्थः पादः ॥

ॐ॥ युक्तिसहिताभि [1] श्रुतिभिर्विरोध श्रुतीनामपाकरोत्यस्मिन् पादे ।

[1]"तथा प्राणाः" (२ ४ १.), "तत्प्राक् श्रुतेश्च" (२ ४.४ ), "तत्पूर्वकत्वाद् वाचः" (२.४.५ ), "श्रेष्ठश्च" (२.४.६.), "सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" (२ ४.२१ ) इत्याद्यधिकरणानि व्याख्याति – **"मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवाः"** इति । मुख्यप्राणादयः सर्वेऽपि तत एव सर्वेश्वराद् विष्णोरुद्भविनो निर्णीयन्ते । उद्भवश्रुतियुक्तीनामेव बहुत्वादिना बलवत्त्वान्मुख्यार्थतोपपत्ते । अनादित्वश्रुतियुक्तीनामल्पत्वादिना दुर्बलत्वाद् गौणार्थत्वोपपत्तेश्च[2] ।

अत्र तावत् सर्वजन्तूनामिन्द्रियाणि मनोवाक्पूर्वाणि, तन्नियन्ता मुख्यप्राणश्च, [3]तेषामेतैर्भोगस्याऽयतन देहश्चेत्येतेषा विष्णोरेवोद्भव इति ह्युक्तम् । ये

---

1 "तथा प्राणा " इत्यादीनि त्रीणि सूत्राणि प्रथममधिकरणम् । "तत्प्राक् –" इत्येक द्वितीयम् । "तत्पूर्वकत्वात् –" इत्येक तृतीयम् । "श्रेष्ठश्च" इत्यादि षष्ठम् । द्वे च सूत्रे । "सञ्ज्ञामूर्ति –" इत्यादि द्वादशमेक सूत्रम् । भाष्ये इन्द्रियाणीति प्राथमिकानि त्रीण्याधिकरणानि, मुख्यप्राण इति षष्ठम्, देहश्चैवेति मूर्तिक्लृप्त्या द्वादश च मुखतो व्याख्यातानीति तानि सूत्राणि मुखत पर्यग्रहीत् । आदिपदेन च चतुर्थपञ्चमे, दशमैकादशे, त्रयोदश चाधिकरणान्युपसगृह्येरन् ।

2 तथाहि सूत्रे – "गौण्यसम्भवात्" (२ ४ २ ), "प्रतिज्ञानुपरोधाच्च" (२ ४ ३ ) इति । समस्त च तज्जमिति प्रतिज्ञानुपरोध स्फुटमेवोक्त ।

3 तेषा जन्तूनाम् । एतैरिन्द्रियै ।

---

१ "युक्तिसहितश्रुति –" ग

पुनरेतेषा विशेषा इष्यन्ते ते चात्र चशब्दाभ्या संगृह्यन्ते। तथाहि – श्रोत्रादि १-प्राणानामिदं विषयं प्रति द्रवणादिन्द्रियत्वम्[1], ज्ञानेन्द्रियत्वेन सप्तत्वम्, तेषामेव कर्मेन्द्रियसाहित्येन द्वादशत्वम्[2], स्वरूपतोऽणुत्वम्, प्रकाशतो व्याप्तत्वम्[3] गुणतो जीवाधीनत्वम्, मुख्यतो मुख्यप्राणाधीनत्वम्, परममुख्यतो विष्णवधीनत्वं च[4], अथ मुख्यप्राणस्य त्वनिन्द्रियत्वम्, तन्नियन्तृत्वम्,

1 तथाचैकादशमधिकरण व्याख्यातम् । तत्र हि त्रीणि सूत्राणि – " त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" (२ ४ १८), "भेदश्रुते" (२ ४ १९), वैलक्षण्याच्च" (२ ४ २०) इति । तदेतदाह – मुख्यप्राणश्चेन्द्रियाणि चेति । प्राणा इन्द्रियाणि मुख्यप्राणस्त्वनिन्द्रियमिति किलोक्त भवति । तथाहि भाष्ये पौत्रायणश्रुति – "अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीद द्रवन्ति" इति । "प्राणो मुख्यस्त्वनिन्द्रियम्' इति च । "द्रवता हीन्द्रियाणा च नियन्ता प्राण एकराट्" इति ।

2 तथाच चतुर्थमधिकरण व्याख्यातम् । तत्र हि द्वे सूत्रे – "सप्त गतेर्विशेषितत्वाच्च" (२ ४ ६) इति, "हस्तादयस्तु स्थितेऽतो नैवम" (२ ४ ७) इति च । "सप्त प्राणास्त्ववगते पञ्च प्राणाश्च कर्मण । एव प्राणद्वादशकम्" इति भविष्यत्पर्वणि । तदेतदाह – इन्द्रियाणि चेति । ज्ञेय प्रति द्रवणाद् यानीन्द्रियाणि सप्त, तानि च, कार्य प्रति द्रवणाद् यानीन्द्रियाणि पञ्च, तानि चेति ।

3 तथाच पञ्चममधिकरण व्याख्यातम् । तत्रहि सूत्रम् – "अणवश्च" (२.४ ८) इति । अणवश्च विततश्च प्राणा इति । तदेतदाह – इन्द्रियाणि चेति । अणुत्वेनाभिमतानीन्द्रियाणि प्रकाशतो व्याततानि चेति पक्षान्तरे चशब्द । "च पादपूरणे पक्षान्तरे हेतौ" इत्यभिधानम् ।

4 तथाच दशममधिकरण व्याख्यातम् । तत्र हि त्रीणि सूत्राणि – "ज्योतिराद्यधिष्ठान तु तदामननात्" (२ ४ १५), "प्राणवता शब्दात्" (२ ४ १६), "तस्य च नित्यत्वात्" (२ ४ १७) इति । तदेतदाह – मुख्यप्राण-

१ "श्रोत्रादीनामिदम्" – ख
"श्रोत्रादीना प्राणाना –" ग घ

अन्तरणुत्वम्[1], बहिर्महत्वं चेत्यादयः प्राणविशेषा. प्रथमचकारसंगृहीता. । अथ मासादेर्देहावयवस्य भौमत्वम्, लोहितादेराप्यत्वम्, मज्जादेस्तैजसत्वमित्यादयो[2] देहविशेषाश्चरमचकार[1]सगृहीता ॥ ० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ० ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ० ॥

[3]"पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" (२ ४ १३.), "अणुश्च" (२ ४ १४)

---

श्चेन्द्रियाणि इति । कारयिता मुख्यप्राण करणानि चेन्द्रियाणीति । तदेव चकार करणत्व ममुच्चिनोति । जीव प्राण परम प्रति चेति तस्य त्रैविध्य च स्वयमेव समाहरनि । अत्र "तेषा नियामक प्राण" इति प्राण प्रति करणत्वमेकादशाधिकरणे गतम् । अष्टमे च – "ईशो ह्यसौ सर्वस्येशितव्यश्च परस्य" इति ।

1 एतेन "पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" (२ ४ १३) इत्यष्टमम्, "अणुश्च" (२ ४ १४) इति च नवम चाधिकरणमुपसगृहीतम् – मुख्यप्राणश्चेति । पञ्चात्माऽपि प्राणस्तदुद्भव इत्येकोऽर्थ । अणुश्च महाश्च प्राण इति द्वितीय । अत्र टीकाया प्राणस्य पञ्चवृत्तित्व तु "इत्यादय प्राणविशेषा" इत्यादिशब्दगृहीतम् ।

2 एतेन त्रयोदश चरममधिकरण व्याख्यातम् । तत्र हि द्वे सूत्रे – "मासादि भौम यथाशब्दमितरयोश्च" (२ ४ २२), "वैशेष्यात्तु तद्वादस्तद्वाद" (२ ४ २३) इति । तदेतदाह – देहश्चेति । द्वादशमधिकरण देह इति व्याख्यातम् । त्रयोदशस्य चाधिकरणस्यार्थविशेषाश्चकार समुच्चिनोतीनि । उक्तमेतत् पुरस्तात् – सोऽय चकारस्य स्वभाव , यदय विचिन्वन् समुच्चिनोति ययमिह समुच्चिनुयामहमिति । अथवैव व्याख्येयम् – हेत्वर्थश्चकार । यतो देह अत एव भूतै सम्भूत इति । भूतैरुपचितमेव हि देह प्रणिगदन्ति । अत एव शरीरादिपद विहाय देहपदमुपादत्त देहश्चैवेत्येवकारोऽधिकरणार्थमवधारयति ।

3 यद्यपि पूर्वं चकारेण समुच्चिकाय । तथाऽपि स्पष्टत्वाय पुनरन्वाचेष्ट द्वे अधिकरणे इत्याह – पञ्चेत्यादि ।

---

१ "चकारेण सगृ –" क

इत्यधिकरणे। "मुख्यप्राणवशे सर्वम्" इति । प्राणगणाधिपति प्रधानवायुर्हि मख्यप्राणो नाम । स तावत् प्राणापानादिनामवद्भिः स्वरूपै. पञ्चधा वर्तमानत्वात् तादृग्दासनियामकत्वाद् वा पञ्चवृत्ति· प्रपञ्चितः[1] । तस्य वशगमेवेदं[१] सकलमपि जगज्जातम् । स हीदमन्तर्बहिश्च स्थित्वा धत्ते[2] ।। ० ।। ८ ।। ६ ।।०।।

"चक्षुरादिवत्तु तत्सहशिष्टचादिभ्यः" (२.४.११.) इत्यधिकरणम्[3] । "स विष्णोर्वशगः सदा" इति । अन्यजगदीश्वरो मुख्यप्राणो विष्णोरेव वशग । नत्वन्यवशगः स्ववशो वा । अवान्तरमुख्येश्वरत्वात् तयो. । ससारेऽप्यवान्तरेश्वरस्य मुक्तौ मुख्येश्वरत्वमपि सुलभमिति सन्देहापोहार्थम् "सदा विष्णोर्वशग." इत्युक्तिः । मुक्तावपि स्वातन्त्र्याभावान्न मुख्येश्वरत्वमित्यर्थः । नहि स्वतन्त्रयुगल युक्त श्रुतं दृष्ट वा भवति[4] । नाप्यन्यस्य तदैक्य सर्वथेत्युक्तम् ।। ० ।। ।। ७ ।। ० ।।

---

1 तथाच श्रुति – "प्राणो वाव पञ्चवृत्ति प्राणोऽपानो व्यान उदान समान इति । तेभ्यो वा एतेभ्य पञ्च दासा प्रजायन्ते । प्राणाद् वाव प्राणोऽपानादपानो व्यानाद् व्यान उदानादुदान समानादेव समान " इति ।

2 तथाच कौण्डिन्यश्रुति – "स वा एष प्राणोऽणुमहान् नामान्तर्वाऽणुर्बहिर्महान् प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परस्य" इति ।

3 अधिकरण सप्तम द्विसूत्रम् । तथाच द्वितीय सूत्रम् – "अकरणत्वाच्च न दोषस्तथाहि दर्शयति" (२ ४ १२ ) इति । तदेतदाह – "अन्यजगदीश्वरो मुख्यप्राण " इति ।

4 तथाहि भाष्ये – "सर्वकर्ताऽपि सन् प्राण परमाधारत स्थित । कथमेवान्यथा स स्याद् यतो नैवेश्वरद्वयम् । अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । अतो मध्यमतामाहुस्तस्य वेदेषु वेदिन । अनन्येश्वरता तस्य तदन्येश्वरवर्जनम्" इत्यादि । द्वादशाधिकरणे प्रपञ्चितोऽपि विरिञ्चोऽत्र मुख्यप्राणपदेनैव गृहीत । तदाह तत्त्वदीपिकाकृत् – "स्वयमेवाय भगवान् प्राणात्वादूर्ध्वं चतुर्मुखपदमधिष्ठास्यतीति ज्ञापयन् प्राणस्वरूपनिरूपणावसरे चतुर्मुख प्रसञ्जयति" इति ।

---

१ "वशमेवेदम्" क ग

पादार्थेन सहैवाध्यायार्थमपि निगमयति—"**सर्वदोषोज्झितस्तस्माद् भगवान् पुरुषोत्तम.। उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन**[१] **सर्वथा**"इति।अस्मिन् पादे तावत् सर्वोत्पादकत्वात्[२] सर्वस्य[3] तदधीनत्वाच्च भगवान् विष्णुरेव सर्वेश्वर इति ह्यर्थादु[४]क्तम् । तत्रोक्तयुक्तिप्रवाहात् सर्वेश्वरत्वरोधकैः सर्वैरपि दोषै· स उज्झितः। तस्य सर्वेश्वरत्वसिद्धये [५]ऽस्माभिरुक्ता· सार्वज्ञ्यादिगुणाश्च वेदेन न विरुद्धा.। तस्य वेदस्य सर्वप्रकारयुक्तिसाहित्ये केवलत्वेऽपि । कुत·? तादृग्वेदस्यानन्तयुक्तिसहितानन्तश्रुतिविरोधात् । नच तस्याप्यप्रामाण्यम्[६] । एतदविरुद्धार्थसम्भवनियमात् । अत एव गतिसामान्यमवष्टभ्य "सर्वथा" इति दृढमेव निगमयाञ्चक्रे ।

स सर्वेश्वरो विष्णुर्भगवानध्यायोपन्यस्तप्रमाणसामर्थ्यात् सर्वकर्तृत्वविरोधिभि. सर्वदोषैरुज्झित[७] । अज्ञानपारतन्त्र्यादिभिर्गर्भभावजन्मादिभिरशनायापिपासादिभी रागद्वेषादिभिर्गरिष्ठैर्लघिष्ठैर्वा सर्वैरपि दोषैरुज्झितः । ये चास्य विष्णोरनन्तवेदपदसमुदायेन योगवृत्तितः प्रतिपादितानन्तगुणाश्चतुर्धाऽप्यविरुद्धा. । तथाहि—स्मृत्यादियुक्तिभि, साङ्ख्यादिसमयैः, वियदादिकेवलश्रुतिभिः, प्राणादिसयुक्तिश्रुतिभिरित्येभि· प्रत्येकमपि[1] चतुर्विधैर्विरोधिप्रमाणै-

---

1 इयमिह प्रक्रिया—युक्तिस्तावत् युक्तिभिर्योक्तसमयै श्रुतिभिर्योक्तश्रुतिभिश्चेति चतुर्विधेन विरोधेन विरोधिनी भवति। एवमितरे त्रयोऽपि। एव प्रत्येक च चतुर्विधमिति षोडशप्रकारमिद विरोधिप्रमाणमुदितम् ।

---

१ "वेदेषु" क ख
२ "सर्वोत्तमत्वात्" ख
३ "सर्वस्य च तद—" क
४ "इत्यर्था—" क. ख ग
५ "सिद्धये येऽस्मा—" क
६ "—ण्यम् । तदवि—" क
७ "—रुज्झित । तथाहि—अज्ञान—" घ

रविरुद्धाः । कथमेतदिति चेत्, षोडशप्रकारमपीदं किञ्चित् सदोषं किञ्चिन्निर्दोषमिति[१] द्विविधम् । तत्र सदोषस्य भगवद्गुणनिषेधकर्मण्यशक्तिः । निर्दोषस्यानारम्भ एव[1] । तस्मादुभयथाऽप्यविरुद्धा एव । चशब्दान्निर्दोषत्वं च हरेरविरुद्धम् । "गुणाः श्रुताः" (सौपर्ण०) इत्यादिश्रुतेः ।। ० ।। ० ।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां
त्रैविक्रमार्यदासकृतावानन्दमालायां
द्वितीयोऽध्यायः

---

१ गतिसामान्येन भगवत्येवोभयसमन्वयात् । तदेतदुक्तं भाष्ये सर्वथेति । तेन विरोधिप्रमाणानामेकपदेन गतिरुक्ता भवति ।

---

३ "–मिति । तत्र" क

## ॥ तृतीयाध्यायः ॥

ॐ॥ मोक्षसाधनं विधीयतेऽस्मिन्नध्याये । वस्तुनिर्णयस्य पुरस्तात् कृतत्वात् । तच्च साधनं ज्ञानमेव प्रधानमिति वदन्, तन्मूलसाधनं वैराग्यं प्रतिपादयत्यस्मिन् पादे । तत्प्रतिपादनं च कर्मादेर्मोक्षव्यतिरिक्तनानाफलत्वप्रकटनेन तन्निन्दनपूर्वकं भवति ।

[1] **"तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्"** (३.१.१), **"यथेतमनेवं च"** (३.१.९.), **"तत्स्वाभाव्यापत्तिरुपपत्तेः"** (३.१.२३.), **"नातिचिरेण विशेषात्"** (३.१.२४), **"अन्याधिष्ठिते पूर्ववदभिलापात्"** (३.१.२५.), **"रेतःसिग्योगोऽथ"** (३.१.२७.), **"योनेः शरीरम्"** (३.१.२८.) इत्यधिकरणानि[१] व्याख्याति –**"शुभेन कर्मणा स्वर्गम्"** इति। योऽयमिष्टापूर्तं वरिष्ठं मन्यमानस्तदनुष्ठाता प्रमूढः स तावत् तेन शुभेन कर्मणा विष्णोरीषत्प्रसादसाहित्यात् स्वप्नसुखकल्पं स्वर्गसुखं याति । तद्भुक्त्यवसाने ततः पुन-

---

1 "तदन्तर –" इत्याद्यष्टौ सूत्राण्येकमधिकरणं भाष्यरीत्या । अष्टावपि सूत्राणि प्रत्येकमष्टावधिकरणानि न्यायमालाविवरणयो रीत्या । तथाचानुव्याख्यान्यायविवरणयोरेकः पक्षः । भाष्यसंग्रहभाष्ययोश्चापर इति । टीकान्तराणि तु न्यायविवरणावलम्बानि । आनन्दमाला तु हृषीकेशतीर्थादिसम्मतं भाष्यपक्षमेवानुसरति ।
"यथेतम् –" इत्यादि चत्वारि सूत्राणि (९-१२) द्वितीयमधिकरणम्। "तत्स्वाभाव्यापत्ति –" इत्येकं सूत्रं (२३) सप्तममधिकरणम् । "नातिचिरेण –" (२४) इत्यष्टमम् । "अन्याधिष्ठिते –" इत्यादि द्वे सूत्रे (२५–२६) नवमम् । "रेतस्सिग्योगोऽथ" (२७) इति दशमम् । "योनेः –" (२८) इति च चरममेकादशमधिकरणम् । इतीयमधिकरणपरिपाटी ।

---

१ "इत्येतानि" – क ख

**रुद्धोधमिवाधःपात च[1] । तद् वक्ष्यमाणचशब्दाद् बोद्धव्यम् । अत्राय विशेषः — [2]धूमाद्यभ्राकाशमार्गेण चन्द्रलोकं गच्छति । तत[3] आकाशवायुधूमाभ्रमेघवर्ष-**

---

१ "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्" (३ १ ८) इति सूत्रम् । "तत शेषेणेम लोकमायाति पुन कर्म कुरुते पुनर्गच्छति पुनरागच्छति" इति श्रुतिर्भाष्ये । अत्र गमनागमने भूतै सहेति ज्ञायते । भूतमोक्षे गतस्याऽगमनासम्भवात् ।

२ "धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकम्" इति काषायणश्रुति धूमाभ्राकाशचन्द्रलोकाना क्रमेण प्राप्तिमाह । "य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद् रात्रि रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासास्तान् (नैते सवत्सरमभिप्राप्नुवन्ति) मासेभ्य पितृलोक पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद् देवानामन्न त देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वान पुनर्निवर्तन्ते" इति च्छन्दोगाना श्रुतिरन्यानेव लोकान् मध्ये गम्यानाह । तदेतदुभयसङ्गमनाय धूमाद्यभ्राकाशमार्गेणेत्यादिपदमुपादत्त टीकायाम् । तेन ज्ञायते च्छन्दोगोपनिषद्यभ्र निवेशनीयम् । काषायणाना च श्रुतौ रात्र्यादीनि पितृलोकान्तानि । तेन श्रुती अविरोधिन्यौ भवत । ननु क्व प्रवेशनीयम्? किं धूमादभ्र गच्छति? किवा धूमाद् रात्रि गच्छति? एव तु भवति — धूमादीति टीकास्वारस्यात् धूमस्याभ्रस्य च मध्ये कानिचित् सन्ति स्थानानि गम्यानीति । तानि च रात्र्यादीन्येव स्यु । श्रुतिस्वारस्यात्। ततश्च धूमाद् रात्रिकृष्णपक्षादिद्वाराऽभ्र गच्छति । अभ्रादाकाशम् । आकाशाच्च चन्द्रलोकमिति ।

आगमनमार्गे तु च्छन्दोगाना काषायणाना चैकरूप एव पाठ । तथाहि — "यथेतमाऽऽकाशमाकाशाद् वायु वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्र भवत्यभ्र भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति । आ आकाश यथेत गत तथैवाऽगच्छति । तत पर तु मार्गान्तिरेणेति । ननु व्याहृति कथञ्चित् पर्यह्रियत धूमाद् रात्रिमिति धूमादभ्रमिति । पुनरुक्तिस्तु कथ परिहरिष्यते अभ्र भवति मेघो भवतीति? क्व भो पुनरुक्ति ।

---

१ "तत्र" क

मार्गेणेम लोकमागच्छति । नच तत्र कर्मिणो धूमादिस्वारूप्यापत्तिः¹ । नापि तत्पदप्राप्तिः । किन्तु? तत्स्वाभाव्यापत्तिरेव[1] । तस्यैवोपपत्ते । [2]नचाऽगमनं मन्वन्तरान्तराले क्वचिदिदिति मन्तव्यम् । ²वत्सरात्पूर्वमेवेति[3] नियमात् । [4]नच

---

अन्योऽभ्रमानी । अन्यश्च लोक । अन्यच्चाभ्रम् । अन्य एव मेघमानी । अन्य एव च लोक । अन्य एव च मेघ । अभ्र कुत ? अपा भरणाद् वाऽभ्रम् । भ्रमणाद् वाऽभ्रम् । अभ्र गतौ । यदपो हि बिभ्रदवर्षद् भ्रमति न भ्राजते च । मेघ कुत ? वृष्टचा सिञ्चन् हि मेघ । मिह् सेचने । नन्वभ्र मेघ इति सह पठन्ति? पठन्ति, ये पर्वत गिरिं च सह पठन्ति, वापी कूप च । तदेतदाह – आकाशवायुधूमाभ्रमेघवर्षमार्गेणेति । इति प्रथमद्वितीये अधिकरणे व्याख्याते ।

1 समानदेशत्वादितत्सादृश्यापत्तिरित्यर्थ । "तस्य धूमादे स्वभावसदृश स्वभावो यस्य स तत्स्वभाव । गजमुख इतिवत्" इति तत्त्वदीपिका । "नह्यन्यस्यान्यथाभावो नच तत्पदमिष्यते । विद्यागम्य पद यस्मान्न तत् प्राप्य हि कर्मणा" इत्युपपत्तिर्गारुडे । सप्तममधिकरण व्याख्यातम् ।

2 अष्टम व्याख्याति – नचाऽगमनमिति ।

3 "स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात् पूर्वमेव तु । मातु शरीरमाप्नोति पर्यटन् यत्रतत्र च" इति नारदीयवचन भाष्ये ।

4 इदानी नवम व्याख्याति – नचेत्यादि । "त इह ब्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति स्थावरजातिहेतुत्वादन्ततो दु खफलत्व यज्ञादेरिति पूर्वमतम् । "सोऽवाग्गत स्थावरान् प्रविशत्यभोगेनैव" इति श्रुतेर्जायन्त इति तत्समानस्थानत्वमेवोच्यते न तत्त्वमिति सिद्धान्तसार ।

---

१ "स्वाभाव्यापत्ति "(?) ग

२ "मन्वन्तरात् पूर्वे –" क.

तस्य व्रीह्यादिषु दुःखानुभव । प्रवेशमात्रवचनात् । [1]रेतोरक्तसंयोगाच्छरीरी भूत्वा तत [1]एव हि भोगान् भुक्ते । एवं हीश्वरक्लृप्तिरिति ॥ ० ॥ ॥ १ ॥ २ ॥ ० ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ० ॥

[2]"अनिष्टादिकारिणामपि च श्रुतम्" (३.१.१३.) इति सूत्रम् । "निरयं च विकर्मणा" इति । यश्च पुर्नविहितमकुर्वन् निषिद्ध वा कुर्वन् मूर्ख· स तु कामक्रोधादिनाऽऽचरितेन विपरीतकर्मणा[2] भगवद्वैमुख्याद् रौरवादिनामकं निरय याति; चशब्दात् कथञ्चित् ततः पुनरुत्थाने तिर्यक्त्व च । अथवा कथञ्चिन्निरयशब्दितं तिर्यक्त्वमेव याति[3] । चशब्दात् पुनर्मानुष्यं च । अयं जीव शुभेन

---

1 अथ दशमैकादशे सहैव निराह – रेतोरक्तेत्यादि । तथाच श्रुति – "ततो वै खलु दुर्निष्प्रपतन योयो ह्यन्नमत्ति यो वा रेत मिञ्चति तद्भूय एव भवति" इति । "दिव स्थास्नून् गच्छति स्थास्नुभ्य पितर पितुर्मातर मातु शरीरेण जायते" इति च । "ततो रेत सिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते" इति च । तदेतत् सर्व ममुचित चकारसमुच्चित चकार भाष्यकार शुभेन कर्मणा स्वर्गं चेति ।

2 सम्प्रति तृतीयमधिकरण चतुस्सूत्रमुपस्थापयति – अनिष्टेत्यादिना ।

3 तथाहि श्रुति – "तद् य इह रमणीयचरणा अभ्यशो ह यत् ते रमणीया योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनि वाऽथ य इह कपूयचरणा अभ्याशो ह यत् ते कपूया योनिमापद्येरन् श्वयोनि वा सूकरयोनिं वा चण्डालयोनि वा" इति । तदेतत् तिर्यक्त्वमपि निरय एव । निरय कुत ? अयान्निर्गतो हि निरय । नीचैरयन वा । अयस्य निषेधो वा यत्र । सर्वं समान नीचासु च योनिषु ।

---

१ "ततो भोगान्" ग

२ "विकर्मणा" ग

कर्मणा स्वर्गं याति, विकर्मणा निरयम्, चशब्दात् पुनरिम[1] लोक चेति हि तदुभयत· पुनरावर्तन चशब्दो वक्ति । अनावृत्तियोग्यस्य तमसो मुक्तेश्च पृथगेव वक्ष्यमाणत्वात् ॥ ० ॥

[2]"सयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" (३.१.१४.) इति सूत्रम्। **"मिथ्याज्ञानेन च तमः"** इति । संयमनमनुभूय केषाञ्चित् तत आरोहवाचिन एतत्सूत्रावयवस्य व्याख्यान "निरय च" इति वाक्येन कृतम् । तस्मादवरोहवाचिन एवेद व्याख्यानम् । अयमर्थ – य एतद् वस्तुतत्त्व समस्तमपि विपरीतं जानाति; नहि किञ्चिदपि यथातथ वेत्ति, सर्वथाऽप्यत[१]द्योग्यत्वात्; तद् यथा – अब्रह्म ब्रह्मत्वेन, अन्यदनन्यत्वेन,[२] सत्यं मिथ्यात्वेन, मानममानत्वेन, विपरीतं विपर्ययेण, सरूपं सावयवं सगुण सक्रिय सविशेषं चातद्वत्त्वेनेत्यादि सोऽय मायी हरिगुरुवेदद्वेष्टा तदवमन्ता च सन्ततमिति भगवतोऽत्यन्तमप्रिय· । अत एव सोऽन्यथाज्ञानी तेनान्यथाज्ञानेनान्धन्तमोनामकं नित्यनिरयं च याति । [3]कुम्भीपाकनामकादनित्यनिरयाच्चावरुह्येति शेषः । चशब्दोऽवधारणे।

---

1 तथाचेद वैराग्यबीजमुदित श्रुतावपि – "अथैतयो पथोर्न कतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीय स्थान तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत" इति ।

2 तदेतदधिकरणे द्वितीय सूत्रमाह – सयमन इत्यादि ।

3 "रौरवोऽथ महाश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ । इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम्" इति भारतवचन भाष्ये । "अपि सप्त" ((३ १ १६) इति च सूत्रम् ।

---

१ "सर्वथाऽतद्यो –" क

२ "अन्यदन्यत्वेन" क ख ग

नच कदाचित् ततः पुनरुत्तिष्ठते । नाप्यत्र[१] कश्चित् सुखलेश, दु:खस्यापि न पुनर्ह्रासो विद्यते, यथाक्लृप्तपरिपूर्तिरेवेत्यादयोऽपि[२] विशेषाश्चकारोपलक्षिता·[1] । विस्पष्टमेव श्रुतिस्मृत्युपदिष्टत्वात् । [2]नच तत्रापि प्रवर्तयितुर्विष्णोर्दु:खस्पृष्टि· शङ्क्या । "सर्वदोषोज्झित·" इत्यादिना दत्तोत्तरत्वात् ॥ ॥ ० ॥ ३ ॥ ४ ॥ ० ॥ ६ ॥ ० ॥

[3]"विद्याकर्मणोरिति तु प्रकृतत्वात्" (३.१.१८) इत्यधिकरणे तात्पर्यतो

---

1 एतेन "स्मरन्ति च" (३ १ १५) इत्यपि व्याख्यातम् । तथाहि स्मरन्ति– "महातमसि मग्नाना न तेषामुत्थिति क्वचित्" इति, "सुखस्यानन्तर दु ख दु खस्यानन्तर सुखम् । इति सर्वत्र नियम पञ्चकष्टे तु तत् सदा" इत्यादि । "ततोऽवरुँह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचित्" इति च श्रुति ।
एतेनैव चकारेण तमसि सुखलेशवैधुर्यकेवलक्लेशप्राचुर्यसूचक षष्ठमप्यधिकरण व्याख्यातम् । तथाहि तत्र सूत्राणि – "न तृतीये तथोपलब्धे" (३ १ १९), "स्मर्यतेऽपिच लोके" (३ १ २०), "दर्शनाच्च" (३.१ २१), "तृतीये शब्दावरोध सशोकजस्य" (३ १ २२) इति । "न तम सुखानुवृत्त केवल ह्येवात्र दु ख भवति" इति श्रुति । "नान्धे तमसि मग्नाना सुखलेशोऽपि कश्चन" इति च स्मृति । "अत्यन्तदु ख-सँल्लीनान् निश्शेषसुखवर्जितान् । नित्यमेव तथाभूतान्" इति च पाद्मे ।

2 इदानी "तत्रापि च तद्व्यापारादविरोध" (४ १ १७) इति चतुर्थमधिकरण पूर्वभाष्येणैव व्याकृतप्रायमित्याह – नचेत्यादि । "नासौ दु ख-भुगीश्वर प्रभुत्वात्" इति पौत्रायणश्रुते, "नासौ नीचोच्चता याति पश्यत्येव प्रभुत्वत" इति भागवततन्त्राच्चायमर्थोऽवसीयते ।

3 नहि महान्त पूर्वं पठित्वा उत्तर स्मरन्ति । किन्तूत्तर स्मरन्त एव पूर्वं

---

१ "नात्र" ग

२ "–दयो विशेषा –" क

विवक्षितमर्थं वदन् "विद्यैव तु निर्धारणात्" (३. ३. ४८.) इत्युपरि पठिष्यमाणमप्यधिकरणमिहैव व्याख्याति – "**ज्ञानेनैव परं पदं याति**" इति । अथ य एतद् वस्तुतत्त्व समस्त सम्यगेव जानाति च वदति च; नच किञ्चिदन्यथा व्यवहरति[१], सम्यग्ज्ञानयोग्यत्वात्, तद् यथा – स्वतन्त्रं स्वतन्त्रत्वेन, परतन्त्र परतन्त्रत्वेनेत्यादि यथाविषयमेव स तु सम्यग्ज्ञानी तेन सम्यग्ज्ञानेनैव भगवत्प्रसादसम्पदा देहोत्क्रान्त्यनन्तर यथाप्रथितेन पथा गत्वा परं पदं वैकुण्ठादिनामकं विशिष्टस्थानं प्राप्नोति ।

तच्च ज्ञान नारायणपरायणपरविद्याख्यसच्छास्त्राविरतावृत्तिजन्यं तद्भक्त्यादिगुणबृहितं तदापरोक्ष्येण च युतम[२]भिप्रेयते । "दर्शनाच्च" (३ ३.४९.) इति पृथक्सूत्रात्[1] । यथाप्रथितश्च पन्था अर्चिरादिरिहैव वक्ष्यमाणः । तच्च स्थानं यथायोग्यपरिपूर्ण[३]सान्द्रानन्दैकभोजनायतनम् । नच कदाचित् तत. पुनरावर्तते । असौ मोक्षी वैकुण्ठादिगत पर पदं विष्णोरेव स्वरूप सम्पद्यत इति वा तदर्थः । एवशब्दः कर्मादिर्मोक्षसाधनत्वं निवारयति ॥ ० ॥ ५ ॥ ० ॥

पादार्थं निगमयति – "**तस्माद् विरक्तः सन् ज्ञानमेव समाश्रयेत्**" इति । कर्मादिकमुक्तप्रकारेण मुक्तिव्यतिरिक्तस्यैव साधनमिति यत् तस्मान्मुमुक्षुः

---

पठन्तीत्युक्तम् । तत् स्मारयन्नेव पञ्चममधिकरणमवतारयति – विद्येत्यादि । "विद्यैव –" इत्यादि तृतीयस्य तृतीये त्रयोविंशाधिकरणे प्रथम सूत्रम् । "दर्शनाच्च" इति द्वितीयम् । "श्रुत्यादिबलीयस्त्वाच्च न बाध" (३ ३ ५० ) इति तृतीयम् । तदेता त्रिसूत्रीमत्रत्यभाष्येणाऽसञ्जयति ।

1 "दृष्ट्वैव त मुच्यते नापरेण" इति सावधारणश्रुतिदर्शनाच्च इति तदर्थात् । तदेव बलीयस्त्वमुत्तरसूत्रेण "श्रुत्यादि –" इत्याद्याह हि ।

---

१ "व्यवहरति । तद् यथा" क

२ "युक्तमभि –" ग

३ " – पूर्णानन्दसान्द्रभोजना – " ग

सन् तत्साधनभूत सम्यग्ज्ञानमेव समाश्रयेत् । तच्चापरोक्षविषय हि विवक्षितम् । वेदगम्यस्य विष्णोरापरोक्ष्य चोपास्तिजन्यम्[1] । सा च भक्त्यायत्ता । भक्तिरपि वैराग्यजन्या । तस्मात् तदर्थतया वैराग्यं प्रथमत आपादनीयम् । एव ज्ञानस्य [2]मूलसाधनत्वादेवास्य "विरक्त सन्" इत्युक्तिः ॥ ० ॥ ० ॥

इनि श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
तृतीयाध्यायस्य प्रथम पाद

१ "–गम्यम्" क
२ "मुख्यसाधन–" क

## ॥ तृतीयाध्यायस्य द्वितीयः पादः ॥

ॐ॥ ससारविरक्तस्य मुमुक्षोर्भगवद्भक्तिरस्मिन् पाद उच्यते । तदर्थमिह तन्महिमोक्तिः ।

[1]"सन्ध्ये सृष्टिराह हि" (३ २ १ ), "पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ" (३.२ ५.), "देहयोगाद् वासोऽपि" (३.२.६.), "तदभावो नाडीषु तच्छ्रुतेरात्मनि ह्" (३ २ ७.), "अतः प्रबोधोऽस्मात्" (३.२ ८.), "स एव च कर्मानुस्मृतिशब्दविधिभ्य." (३.२.९.), "मुग्धेऽर्द्धसम्पत्तिः परिशेषात्" (३.२.१०.), "अत एव चोपमा सूर्यकादिवत्[१]" (३.२ १८.), "स्थानविशेषात् प्रकाशादिवत्" (३.२ ३५ ), "प्रकृतैतावत्त्व हि प्रतिषेधति ततो ब्रवीति च भूय" (३ २ २२ ), "फलमत उपपत्ते." (३ २ ३९ ) इत्येतानि[२]

1 "सन्ध्ये –" इत्यादि चत्वारि सूत्राणि प्रथममधिकरणम् । "पराभिध्यानात् –" इत्येक द्वितीयम् । "देहयोगात् –" इति तृतीयम् । "तदभाव –" इत्येक चतुर्थम् । "अत –" इत्येक पञ्चमम् । "स एव च –" इत्याद्येक षष्ठम् । "मुग्धे –" इत्येक सप्तमम् । "अत एव च –" इत्याद्येक दशमम् । "स्थानविशेषात् –" इत्यादि द्वे सूत्रे पञ्चदशम् । "प्रकृतैतावत्त्वम् –" इत्येक द्वादशम् । "फलमत –" इत्यादि चत्वार्यष्टादशमित्यधिकरणविवेक । दशमे पञ्चदशे चोभयत्रापि प्रतिबिम्बविचारात् सूत्रक्रममतिहाय दशमानन्तर द्वादशात् पूर्व पञ्चदशस्याधिकरणस्य पाठ ।

१ "– वत् । प्रकृतैता –" ग

२ "इत्यादीनि" क

व्याख्याति – "सर्वावस्थाप्रेरकश्च" इति । [1]सर्वजीवैरनुभूयमानाना स्वप्न-जाग्रत्सुषुप्तिमोहावस्थाना सर्वासामपि तैजसविश्वप्राज्ञनामको भगवानेक एव प्रेरक·[१] । तत्र तैजसप्राज्ञावेव[२] च मोहा[३]वस्थाप्रवर्तकौ । मोहस्यापि स्वप्न-सुषुप्त्योः [४]समुच्चयरूपत्वात् । चशब्दात् स एव तासा निवर्तकश्च । समस्त-प्रवृत्तिनिवृत्त्योस्तदिच्छाधीनत्वात्[५] । [2]एवं संसारावस्थाप्रवर्तकस्त्रिरूपो भगवान्; अथ वासुदेवाख्यस्तुरीयरूपस्तन्निवर्तको मोक्षावस्थाप्रवर्तकश्च ।

---

1 सर्वेषा सर्वासा चावस्थानामिति व्यधिकरण समानाधिकरण च विग्रह-मभिप्रेत्य सर्वजीवैरित्याद्युक्तम् ।
स्वप्नेति प्रथमाधिकरणम् । "सन्ध्य स्वप्न" इति भाष्यात् । "सन्ध्य तृतीय स्वप्नस्थानम्" इति श्रुतिश्च । जाग्रदिति तृतीयमधिकरण व्याख्यातम् । "देहयोगाद् वास जाग्रदपि तत एव" इति भाष्यम् । सुषुप्तीति चतुर्थम् । "जाग्रत्स्वप्नाभाव सुप्ति" इति भाष्यम् । सर्वजीवैरनुभूय-मानानामिति एक एवेति च षष्ठम् । "देशकालविशेषेऽपि स्वप्नादीना स एव हि । तिरस्कर्ता च कर्ता च न खण्डेश म राजवत्" इति श्रुते । मोहेति सप्तमम् । कै रूपैरय प्रेरयति? आह – तैजसेति । अधिकरणक्रमेण तैजस प्रथमगृहीत । ननु चतस्रोऽवस्था । त्रीणि च रूपाणि । मुग्धस्य का गति ? आह – तत्रेत्यादि । बाह्यविषयान् प्रकर्षेण न ज्ञापयन् प्राज्ञ , स्वप्नवच्च दु खमात्र प्रतिस्मारयन् तैजसश्च मुग्ध नियुक्त । कण्ठान्निर्गम हृदयस्य चाप्राप्तिर्दु खबीजम् । चशब्दादित्यादि द्वितीयपञ्चमाधिकरणे व्याख्याते ।

2 एवमित्यादि विशिष्य द्वितीयाधिकरणव्याख्यानम् । "बन्धमोक्षप्रदत्वात्" इति भाष्यम् । "स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च । तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ" इति हि पौराणा पठन्ति ।

---

१ "प्रवर्तक" घ

२ "–वेव मोहा–" ख ग

३ "मोहप्रवर्तकौ" क "–वेव मोहप्रवर्तकौ" घ

४ "समुदाय–" ग

५ "–वृत्त्योस्तदधीनत्वात्" क

नचैतामन्यः[1] स एव वा कश्चिन्निवर्तयति । नित्यस्थितेरेव तदिष्टत्वात् । नच काञ्चिदप्यवस्थामन्य प्रवर्तयेन्निवर्तयेद् वा । स्वयमेव तद्वशत्वात्[१] । एवं सर्वावस्थासु तदधीनत्वादेव[२] तदाभासो जीवः सूर्यकाद्युपम उच्यते[2] । न पुनर्जडत्वादिना । [3]सर्वस्य च [3]जगतः सृष्टिस्थितिसंहाराद्यवस्थाश्च सर्वाः स एव प्रेरयति । [4]कर्मादीनां च साधनावस्थायां साध्यावस्थाया चेश्वर एव प्रेरकः । चशब्दान्मोक्षकाले[४] निवर्तकश्च । तस्यैव तदुपपत्तेः ॥ ० ॥ १–७ ॥ ० ॥ ॥ १० ॥ ० ॥ १२ ॥ ० ॥ १५ ॥ ० ॥ १८ ॥ ० ॥

[5]"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (३.२ ११.), "अरूपवदेव हि तत्प्रधानत्वात्" (३ २.१४.), "तदव्यक्तमाह हि" (३.२ २३.), "उभय-

---

1 अन्य कश्चित् स एव वा ।

2 तदेनेन विवृत भवति दशममधिकरणम् । तथाच भाष्यार्थ –सर्वावस्था-प्रेरकश्च सर्वावस्थाप्रेरको यस्मादत एव तदधीनो जीव सूर्यकाद्युपम इति । प्रतिबिम्बत्वादेव प्रकाशादिवत् स्थानविशेषाद् आनन्दविशेष इत्येत-दपि चकारेण समुच्चीयत इत्युपस्कर्तव्यम् । तेन पञ्चदशमप्यधिकरण-मुपसञ्जग्राहैव भाष्यकृदिति भवति ।

3 सर्वस्येत्यादि द्वादशाधिकरणार्थं । "सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीश सर्वस्य जगतो हरि" इति हि पठन्ति ।

4 कर्मादीनामित्यष्टादशाधिकरणार्थं । "स्वतन्त्र ईश एवैकस्तद्वश कर्म सर्वदा" इति च श्रुति । सर्वदेत्येतत् सर्वावस्थासु साधनावस्थाया साध्या-वस्थाया चेति व्याख्यातम् ।

5 "न स्थानत –" इत्यादि त्रिसूत्रमष्टममधिकरणम् (११–१३) । "अरूप-वत् –" इत्यादि चतुस्सूत्री (१४–१७) च नवमम् । आसप्तम दशम

---

१ "तद्वशगत्वात्" ख

२ "–नत्वादिनैव" क ख घ

३ "सर्वस्य जगत" क ग

४ "चशब्दात् स्वेष्टकाले" ख

**व्यपदेशात्त्वहिकुण्डलवत्" (३.२.२८.) इत्यधिकरणानि[१] व्याख्याति – "सर्वे-रूपेष्वभेदवान्" इति । स्वप्नादिस्थानानामन्योन्यभेदेऽपि तत्प्रेरकेषु रूपेषु न भेदो विष्णोरस्ति । नहि स्थानभेदस्तद्भेदस्य ज्ञापकः कारको वा स्यात् । न केवलं वासुदेवादिचतुर्मूर्तिष्वभेदो मूलमूर्तेः । किन्तु मत्स्यनारायणविश्वाजित-परादिषु[1] दशशतसहस्रामितानन्तमूर्तिष्वप्यभेदस्तस्येति वक्तु सर्वशब्दोपसर्जनम्[२] । अपरथा तेषु रूपेष्वित्येव पूर्णत्वात्[2] । यद्यप्येकस्यैव रूपस्य योगशक्त्या**

---

च व्याख्यात पुरैव । एकादशमुपरिष्टाद् व्याकरिष्यते । द्वादश च व्याकृतम् । "तदव्यक्तम् –" इत्यादि पञ्चक (२३–२७) त्रयोदशम् । "उभयव्यपदे-शात् –" इत्यादि सप्तक (२८–३४) चतुर्दशम् ।

1 आदिपदस्य मत्स्यादिषु प्रत्येकमन्वय । मत्स्यादिषु नारायणादिष्वित्यादि । मत्स्यादिकल्क्यन्ता दश । नारायणादिपुरातनान्ता शतम् । विश्वादि-सर्वप्रहरणायुधान्ता सहस्रम् । अजितपरादिष्वित्यत्र तु न यथासङ्ख्यम् । परादिरमित । अजितादिरनन्त । श्रुतौ बहूनीति चामितमेवोच्यते । तथाहि बृहद्भाष्ये – "परादिरूपो बहुधा सोऽनन्तात्माऽजितादिक " इति । ननु कथमिदम्? अनन्तमेवामित भवति । अमितमेव चानन्त भवति । तत् किमिदमुच्यते – अमित चानन्त चेति? उपपन्नम् । सङ्ख्यातीतत्वा-दमितमुच्यते । सङ्ख्यावैधुर्यादनन्तमुच्यते । अतीत च यद् भवति, अनन्त च यन्न भवति तदमितम् । सङ्ख्यापरम्पराया परपर्यन्त प्रमितत्वात् तदतीत ननु सर्वममितम् । अत एव "परोऽमितश्च" इत्याह । नहि न पारमस्तीति, किन्तु न पारयन्ति निर्देष्टु पारमस्येत्यमितम् । अत एव श्रुतौ सङ्ख्याविशेषमविवक्षित्वा बहूनीत्याह । "बृहतीसहस्रस्वरसमसङ्ख्य पर । व्यञ्जनसमसङ्ख्योऽमित " इति तु प्राञ्च । अत्र त्वन्यथैव । परस्यामितेष्वेकत्वात् ।

2 तदिद "न भेदादिति चेन्न प्रत्येकमतद्वचनात्" इत्यष्टमे द्वितीयसूत्रस्य विवरणम् । तथाहि बृहदारण्यके – "अय वै हरयोऽय वै दश च सहस्राणि बहूनि चानन्तानि च" (४ ५ १९ ) इति ।

---

१ " – णानि । सर्वं – " क ख    २ " – शब्दोपादानम् । अन्यथा" ग

बहुभावसम्भवात् तेषु रूपेष्व[१]न्योन्यधर्मिप्रतियोगिको भेदस्तद्वतो न विद्यत इति वचनादेकमेव तद् रूपमित्यभिप्रेयते । [1]तथाऽपि रूपरूपिणोर्विरुद्धलक्षण-[२]त्वाद् भेदोऽस्तीति मा भूत्; तेषु रूपेषु प्राकृतत्वविनाशित्वादिलक्षणोऽपि न भेदो विष्णोरस्ति, लोकतो विलक्षणत्वात्, अत एव रूपिणि सिद्ध शुद्ध-ज्ञानानन्दमात्रत्वलक्षणं[३] मुख्यैक्यमेव तस्य रूपेष्वपीति राद्धान्त·[४] श्रुतिहृदय-निर्लोडित । [2]किञ्चिद् रूपं व्यक्तम्, किञ्चदव्यक्तम्, स्वय तु व्यक्ताव्यक्त इति च न कश्चिद् भेदोऽस्य भवति । [3]तेषु च [५]रूपेषु विद्यमानैर्गुणक्रियादिभिस्त-द्धर्मिको वा भेदो न विद्यते । एकस्यैव गुणगुण्यादिभावे निदर्शनबाहुल्यात् । एव रूपाणा धर्मित्वप्रतियोगित्वाधिकरणत्वविवक्षया "रूपेषु" इत्येवोक्ति[६] । अन्यतरमात्रविवक्षाया तावन्मात्रानुसारेण प्रयोगोपपत्ते[4] । "नेह नानाऽस्ति

---

1 एतेन नवमाधिकरणविवरण कृतम् । "भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यत । अरूपवानत प्रोक्त क्व तदव्यक्तत परे" इति हि मात्स्ये । "प्रकाशवच्चावैयर्थ्यम्" (३ २ १५) इति द्वितीयसूत्रार्थ – लोक-विलक्षणरूपत्वादरूपश्रुतीनामवैयर्थ्यमिनि । "आह च तन्मात्रम्" (३ २ १६) इनि तृतीयसूत्रार्थ शुद्धज्ञानेत्यादि ।

2 त्रयोदशाधिकरणसारमाह – किञ्चिदित्यादि ।

3 चतुर्दशाधिकरण च निर्वक्ति – तेष्वित्यादि ।

4 सर्वरूपैरभेदवानित्यपि प्रयोगोपपत्ते । तस्मादर्थविशेष सूचयिष्यन्नेव रूपेष्विति सप्तमीमाह । श्रुतिरप्यत्र 'नेह' इति सप्तमीमेव प्रयुञ्जाना भवति सवादिनी ।

---

१ "रूपेष्वेवान्योन्य –" क ख

२ "– णोर्विलक्षण –" ग

३ "मात्रसलक्षण मुख्यै –" क "मात्रत्वलक्षणमुख्यै –" ख

४ "राद्धान्तश्रुतिहृदय निर्लोडितम्" क ख

५ "तेषु च विद्यमा –" ख

६ "इत्युक्ति" ख

किञ्चन" (कठ० ४.११) इति हि श्रुति । [1]ध्यानजन्यस्य तु ब्रह्मत्वप्रतिषेधात् प्रतिबिम्बत्वोक्तेश्च भेद एव ॥ ० ॥ ८ ॥ ९ ॥ ० ॥ १३ ॥ १४ ॥ ० ॥ १६ ॥ ॥ ० ॥

देशान्तरे कालान्तरे वा तदन्योऽप्युक्तावस्थाना प्रेरकः स्यादित्यत आह– "अनेन सर्वगतत्वमायामयशब्दादिभ्यः" (३.२.३८) इत्यधिकरणम्[2] । "**सर्वदेशेषु कालेषु स एकः परमेश्वरः**" इति । अन्तर्बहिः समीपे दूरे चेत्यादिसर्वदेशेषु, तदानीमिदानीं पूर्वं पश्चाच्चेत्यादिसर्वकालेषु, इत्युभयेष्वपि स एको विष्णुरेव सर्वेश्वरत्वात् सृष्टिस्थित्यादिसर्वावस्थानां तासु[१] वा सर्वेषा प्रवर्तक उक्तः ॥ ० ॥ १७ ॥ ० ॥

[3]"अम्बुवदग्रहणात्तु न तथात्वम्" (३.२.१९) इत्यधिकरणार्थं वदन् "वृद्धि-ह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" (३ २ २०.) इति सूत्रं[२] विशेषतो व्याख्याय पादार्थनिगमनं चाभिप्रैति– "**तद्भक्तितारतम्येन**

1 "तथाऽन्यत् प्रतिषेधात्" (३ २ ३७) इति षोडशमप्यधिकरणमेतेनैव शक्यमुपसंग्रहीतुमित्याह– ध्यानेत्यादि । रूपेष्वेवाभेदवान् । ध्यानजस्य तु प्रतिबिम्बत्वमेव न रूपत्वमिति ।

2 अथ सप्तदशमधिकरणम् । यद्यपीद "स एव च–" इति षष्ठाधिकरणेन गतम् । तथाऽपि यदि सर्वशक्तोऽपि स्वयमकुर्वन् भगवान् कौतुकादेवान्य कमपि कदाचिन्नियोजयेत् तदा गत तस्य सदा सर्वप्रेरकत्वमिति शङ्काऽत्रा-पनुद्यते । तथाच भाष्यार्थं । सर्वदेशेषु कालेपु स एक सर्वावस्थाप्रेरक । कुत ? यत सर्वदेशेषु कालेषु स एक । अनेन सूत्रोक्त सर्वगतत्वहेतु-र्व्याख्यात । पुनश्च कुत ? यत परमेश्वर । स्वरूपभूतया मायाख्यया शक्त्या स्वयमेव हि सर्वस्येष्टे । एतेन मायामयशब्दादिभ्य इति व्याख्यातम्।

3 "अम्बुवत्–" इत्यादि त्रीणि सूत्राण्येकमधिकरणमेकादशम् (१९–२१) ।

१ "तासु सर्वेषाम्" क

२ "सूत्रार्थम्" क ग घ

तारतम्यं विमुक्तिगम्"[1] इति । येयं भगवति विष्णौ भक्तिर्ब्रह्मादीनां तारतम्येन विधीयमाना[१] तैस्तारतम्येनानुष्ठीयमाना वा दृश्यमाना तत्तारतम्यानुसारेण तेषां विमुक्तिगं सुखतारतम्यमवगम्यते । अतः सा यथाशक्त्यनुष्ठेया फलवृद्ध्यर्थमिति मथितार्थः ॥ ० ॥ ११ ॥ ० ॥ ० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
तृतीयाध्यायस्य द्वितीय पाद

1 अत्र "विमुक्तिग तारतम्यम्" इति वदन् भाष्यकार तत्प्रतिपादक "अथात आनन्दस्य मीमासा" इति श्रुतिवचन स्फोरयन् तत्सूचक "दर्शनाच्च" (३ २ २१ ) इति तृतीयसूत्रमपि व्यचष्टैव ।

१ "–मानाऽनुष्ठीयमाना" ग

## ॥ तृतीयाध्यायस्य तृतीयः पादः ॥

ॐ॥ भक्ताना भगवदुपासनाऽस्मिन् पाद उच्यते । तस्या एव तद्दर्शनद्वारत्वात् । सा चोपासकाना[१]मधिकारभेदाद् भेदेनोच्यते ।

[1]"आनन्दादयः प्रधानस्य" (३.३ १२), "आत्मशब्दाच्च" (३.३ १६.) इत्यादीन्यल्पगुणोपसहारसूत्राणि व्याख्याति – **"सच्चिदानन्द आत्मेति मानुषैस्तु"** इति । यत्तन्निर्दु.खानन्दा[२]नुभवलक्षण साक्षान्मोक्षाख्य धर्मादिषु प्रधानफल तावन्मात्रलब्धियोग्यैरल्पाधिकारिभिर्मानुषजातिभिस्तदर्थमानन्दश्चित् सदात्मेत्येभिश्चतुर्गुणैरुपास्यो[3] भगवान् विष्णुर्विधीयते । तैरनुपास्य तत्फलासिद्धे. । गुणैरुपासना गुणै.[४] सह भगवद्ध्यानम् । तुशब्दात् पूर्णत्व नाम वैलक्षण्य गुणानां स्मर्तव्यम्[2] । अथ चतुर्गुणोपास्तेरशक्यत्वे[५] आनन्दादीना-

1 "आनन्दादय –" इति पञ्चममधिकरणम् । "आत्मशब्दाच्च" इति तु सप्तमाधिकरणे चतुस्सूत्रे द्वितीय सूत्रम् । "आध्यानाय प्रयोजनाभावात्" (३.३ १५) इति प्रथम सूत्रमुपरिष्टाद् व्याकरिष्यते । अतश्च प्रायो नात्राधिकरणक्रमविवक्षा । यथार्थक्रम विषयोपक्षेपणात् । अत एव ह्यधिकरणक्रमेण सूत्रानुपादान सूचयन् सूत्राणीत्येवाह । नाधिकरणानीति ।

2 एतेन "भूम्न क्रतुवज्ज्यायस्त्व तथाच दर्शयति" (३ ३ ५६) इत्यधिकरण त्रिश व्याख्यातम् । "भूम्न. क्रतुवज्ज्यायस्त्वमिति वक्ष्यमाणन्यायेन

१ "चोपासनानामधि –" क

२ "– नन्दलक्षणम्" क

३ "– पास्यो विष्णुर्वि –" क

४ "– पासनानुगुणै." क ख ग

५ "– रशक्यत्वादानन्दा –" क "– पास्त्यशक्यत्व आनन्दा –" ख

मात्मगुण एकीकारेणापि कथञ्चिदुपास्ति. [१]समस्ति । तथाच योजना – सच्चिदानन्दो विष्णुरात्मेत्युपास्य इति । निर्दोषपरिपूर्णज्ञानानन्दः [1]स्वामी विष्णुरिति ध्यान प्रवचन च कर्तव्यमित्यभिप्रायः ।। ० ।।

[2]"नवा प्रकरणभेदात् परोवरीयस्त्वादिवत्" (३ ३.८ ), "सम्भृतिद्युव्याप्त्यपि चात" (३.३ २४ ), "समान एव चाभेदात्" (३ ३.२०.), "नवा विशेषात्" (३ ३ २२.) इत्यादीनि[२] क्रमाद् बहूपसहारसूत्राणि व्याख्याति –" **सुरेश्वरैः । यथाक्रमं बहुगुणैः**" इति । अयमर्थः – ये पुनस्तत्फलेऽप्यानन्दोद्रेकपूर्वकान् विशेषानिच्छन्ति, नतु फलमात्रम्, योग्यतायामाधिक्यविशेषात्, तैः सुरेश्वरै-

पूर्णानन्द पूर्णज्ञान इत्याद्युपासन प्राप्यते" इति तत्त्वदीपिका । सच्चिदानन्दस्त्वात्मेति मानुषैरुपास्य इति । "तुशब्दस्तु विशेषे" इत्यभिधानम् । इदमुपलक्षणम् । अलौकिकत्व नाम वैलक्षण्यमित्यपि वक्तव्यम् । तेन – "कार्याख्यानादपूर्वम्" (३ ३ १९ ) इत्यष्टम चाधिकरण व्याख्यातम् ।

1 स्वामीत्यात्मशब्दार्थमाह । "स च पुरुषार्थं परतन्त्रस्य जीवस्य स्वामिन सकाशाल्लभ्यत इति स्वामित्व भगवत उपसहर्तव्य विशेषत । तच्चाऽह – आत्मेति । आदत्त इति ह्यात्मा" इति तत्त्वदीपिका । "आदानार्थत्वतश्चायमात्मशब्द पति वदेत् । स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा । स्वामी विष्णुरिति ध्यान विशेषणविशेष्यत । कर्तव्य सर्वथैवैतन्न कथञ्चन विस्मरेत्" (४ १ १४–१५) इत्यनुव्याख्याने । "आत्मा विष्णुरिति ध्यान विशेषणविशेष्यत । सर्वेषा च मुमुक्षूणामुपदेशश्च तादृश " इति भाष्ये (४ १ ३ ) ब्राह्मवचनम् ।

2 "नवा –" इत्यादि द्विसूत्र तृतीयमधिकरणम् । एतत्सूत्रस्थाने "प्रियशिरस्त्वाद्युपचयापचयौ हि भेदे" (३ ३ १३ ) इति सूत्र पठितुमुचितम् । व्याख्यानस्वारस्यात् । "सम्भृति –" इति द्वादशम् । "समाने –" इति

१ "–दुपास्ति । तथाच" क

२ "इत्यादीनि बहूप –" ग

स्तदर्थं स्वस्वयोग्यतातारतम्यक्रमानुसारेण सच्चिदादि[१]चतुर्गुणेषु [1]प्रियशिरस्त्वादिविशेषगुणानां सयोगाच्चतु सङ्ख्यात्ययेन बहुभिः, बहुप्रकरणेषु बहुशाखासु वा पठितैर्गुणैरुपास्यो भगवान् । न केवल चतुर्भिरेव । सुरा ईश्वरा येषामृषिगन्धर्वाणा ते सुरेश्वरा उच्यन्ते ।

[2]पुनश्च[२] स्वरूपसुखादिष्वतिव्याप्त[३]त्वादिमहाविशेषलिप्सुभि सुरैरेव लोकेश्वरैर्वह्निवरुण[४]सूर्यसोमादिभिर्यथाक्रमं प्रियशिरस्त्वादिसहितेषु भूतिव्याप्त्यादिगुणाना संयोगात् तेभ्योऽपि बहुभिर्महाशाखोदितमहागुणैरुपास्य. । न केवल प्रियशिरस्त्वादिसहितैरेव । ऋष्यादिभ्योऽप्येषामाधिक्यात् ।

[3]अथापि पुनर्मौक्तिकेषु स्वगुणेष्वतिसान्द्रत्वादिमहिष्ठविशेषलब्धियोग्यैः सुराणामीश्वरैरिन्द्ररुद्राद्यै[५]र्यथाक्रमं बहुगुणैः सर्ववेदोपवेदेषु आऽऽदित आऽन्ता-

---

नवमम् । "नवा –" इत्यादि द्विसूत्रमेकादशम् । "यथाक्रम बहुगुणै " इत्युक्तभाप्यक्रमापेक्षया सूत्रक्रममतिहाय निर्देश । तमेव क्रम दर्शयति – ये पुनरित्यादिना ।

1 प्रियशिरस्त्वादि –" इत्याद्यधिकरण षष्ठ द्विसूत्रम् । तत् तावदादौ व्याख्याति – प्रियेत्यादि ।

2 पुनश्चेत्यादि सम्भृत्यधिकरण व्याख्यातम् । अत्र भूतिव्याप्त्यादीत्यादिशब्देन वीर्यैश्वर्यादय । तदिदमपिशब्दोक्त सूत्रे । "अपिशब्दाद् वीर्यैश्वर्यादयोऽपि ग्राह्या. । द्वित्वमात्रव्यावृत्त्यर्थं किलाप्रगृह्यासूत्रयत्" इति हि तत्त्वदीपिका । "अत एव भूतिव्याप्त्यायो गुणा " इति भाष्ये प्रमाणवचनम् ।

3 "समान एवश्चाभेदात्" इत्यधिकरणम् । अथापीत्यादि ।

---

१ "सच्चिदानन्दादि –" क

२ "पुन स्वस्वरूप –" ग.

३ " – दिष्वभिव्याप्त –" ग

४ "वह्निवरुणसोमादि –" ख "वह्निसोमवरुणसूर्यादि –" ग

५ " – रुद्रादिभिर्यथाक्रम बहुभि सर्व –" ख ग

दुदितैर्द्रव्यगुणक्रियाणां सामान्यरूपैरनन्तरूपत्वसर्वज्ञत्वसर्वकर्तृत्वादिभिरपि महा-गुणैरुपास्यः । नतु [1]सहितैरेव[१] ।

[2]अथ "यथाक्रम बहुगुणैः" इत्येतद् दशगुणितै शतगुणितै. सहस्रगुणितैरित्यादि-रूपेण गुणाना परिमाणविषयेऽपि द्रष्टव्यम् । नतु[२] सङ्ख्यामात्रविषये । तथैवो-पासकविषयेऽप्येतद् विशेषणमिष्यते । तदा यथाऽऽत्मजातिक्रमं बहवो हि भक्त्यादयः शमादयो वैराग्यादयश्च स्वगुणा येषामृष्यादीनामिति बहुव्रीहि· ॥ ० ॥

[3]अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्" (३.३ ५७), "मन्त्रादिवद्वाऽविरोध." (३.३ ५८.), "अङ्गेषु यथाऽऽश्रयभावः" (३ ३ ६३) इत्या-द्यङ्गदेवोपास्ति[३]सूत्राण्यप्यनेनैव वाक्येन व्याख्यातानि लक्ष्यन्ते । तथाहि– अप्रधानेऽपि गुणशब्दप्रवृत्तेः [4]बहुगुणा इति बहव. परिवारजना अप्युच्यन्ते । यथात्माधिक्यक्रमं तैरपि सहैव भगवान् भक्तैरुपास्यः । एकशब्दस्य प्रधानेऽपि

---

1 प्रियशिरस्त्वादिसहितै, भूतिव्याप्त्यादिसहितैश्च चतुर्गुणैरेव ।

2 नवा विशेषादित्युक्तमधिकारिविशेषमाह–अथ यथाक्रममित्यादि । एतेनैव "नवा प्रकरणभेदात्–" इत्यधिकरण च व्याख्यातम् ।

3 "अङ्गावबद्धा –" इत्याद्यष्टाविशमधिकरणम् । "मन्त्रादिवत्–" इत्येकोनत्रिशम् । "अङ्गेषु–" इत्यादि चतु सूत्र चतुस्त्रिशम् ।

4 "अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगै" इत्यभिधानम् ।

---

१ "न रूप दिसहितैरेव ।" घ मध्ये कियाश्चिद् वाक्यभागो लुप्त ।

२ "नतु तेषा सङ्ख्या–" क. ख घ

३ "–देवतोपास्ति–" ग

**प्रसिद्धेरनेकपर्यायस्य बहुशब्दस्याप्यप्रधानवाचकत्व सिद्धयति[1] । तस्माद् बहुशब्देनाप्यप्रधानभूता अङ्गदेवा[१] गृह्यन्ते । तेषा गुणैरपि यथाविधिक्रम स एवोपास्य इति वा[2] ॥ ७ ॥**

---

1 ननु यद्येव सिद्धयति, सिञ्जिनीपदस्याप्रधानमर्थं इत्यपि सेत्स्यति । कथम्? न्यायसाम्यात् । यो हि यस्यार्थस्तत्पर्यायस्यापि सोऽर्थ इतिन्यायसाम्यात् । कथम्? अप्रधान हि गुणपदस्यार्थं । सिञ्जिनीति गुणपर्याय । "गुणशब्द सिञ्जिन्या प्रयोजयन्त्यप्रधानेऽपि" इति ह्यभिदधति । तस्मात् सिञ्जिनीत्यप्रधान स्यात् । न स्यात् । कुत ? अपर्यायत्वात् । सिञ्जिनीति न गुणपर्याय । गुण इति हि सिञ्जिनीपर्याय । कथमेतत्? परितो ह्यर्थंस्याऽयो पर्याय । गुणशब्दस्य यावन्तोऽर्थास्तावतो न वदतीति सिञ्जिनीत्यपर्याय । सिञ्जिनीशब्दस्य तु यावन्तोऽर्थास्तान् वदतीति गुण इति सिञ्जिनीपर्याय । एवमिहापि । अनेकशब्दस्य यावन्तोऽर्थास्तान् सर्वानपिवदतीति बहुरनेकपर्याय । युक्त चैतत् – बहुष्वप्रधानेषु एको हि प्रधानो भवति ।

ननु एक इति एकत्वसङ्ख्याया वर्तते । अनेक इति तु न द्वित्वे । तेन नञा तद्भिन्नार्थबोधो न भवतीत्यप्रधानमपि नार्थं स्यात् । स्यादेव । तर्हि द्वित्वमपि स्यात् । न स्यात् । नह्येकस्माद् भिन्नोऽनेको भवति । किन्तु यस्य प्रतियोगी नैक सोऽनेको भवति । अत एव द्विवचनस्य प्रवृत्ति । कथ तर्हि अनेकाल्, अनेकज , अनेकगोत्र इति, कथश्चानेकपो द्विप इति? ननु भवतामपि कथमनेकाग्र ? एकाग्रो न भवतीति । समान समाधानम् । एकाल् न भवति । एकजो न भवतीति द्विजोऽनेकज । एकगोत्रो न भवतीति द्वयामुष्यायणोऽनेकगोत्र । एकपो न भवतीति द्विपोऽनेकप । सर्वत्र हि समस्त पद नञा समस्यते । कथ तर्हि "अनेकमन्यपदार्थे" इति । बहुव्रीहिणा समासेन भवति । अनेकोपसर्जन ह्यनेकम् । उपसर्जनवचन हि तत् । एव यत्रक्वचिदपि चेत् प्रयोगस्तदपि गौणतया व्याख्येयम् । सङ्ख्यावाच्यनेकशब्दो बहुवचनान्त इति वदन् वैयाकरणोऽप्यत्रैव किलान्तत आजगाम ।

2 यथाविधिक्रममित्येतेनैव "नवाऽतत्सहभावश्रुते" (३ ३ ६५) इति

---

१ "देवता गृह्यन्ते" ख

[1]"उपसहारोऽर्थभेदाद् विधिशेषवत् समाने च" (३.३ ६.), "आध्यानाय प्रयोजनाभावात्" (३.३ १५.), "सर्वाभेदादन्यत्रेमे" (३ ३.११.), "सम्बन्धादेवमन्यत्रापि" (३ ३ २१.) इत्यादीनि[१] सर्वोपसहारसूत्राणि व्याख्याति – "ब्रह्मणा त्वखिलैर्गुणैः । उपास्यः" इति । य एते[२] सुरेश्वरैरुपास्यमाना आनन्दाद्याः प्रियशिरस्त्वाद्यै सम्भृत्याद्यै सर्वरूपत्वाद्यैश्च सहिताः सर्वकर्तृत्वान्ताः पूर्वोक्ता गुणा.[३] तेष्वेव प्रायशः सर्वशब्दवाच्येषु पुनस्तदेतत्कर्तृत्वादीना क्रियाविशेषाणामपि गुणाना सयोगादखिलैः सम्पूर्णसङ्कुचाकैः सर्ववेदेष्वाद्यन्तत आऽक्षरादा स्वरादा घोषाच्चापुनरुक्त्योदितैर्निर्दोषपरिपूर्णैर्गुणै-[४]रुपास्यः परमपुरुषो विष्णुः सर्वाधिकार्यधिपतिना[2] चतुर्मुखब्रह्मणा, नैवान्यै

द्विसूत्र पादान्त्याधिकरण पञ्चत्रिंशमपि भाषितम् । अङ्गदेवतानामङ्गेषूपासनम्, तदवराणा नवेति व्यवस्थितविकल्पस्यैव क्रमस्य तत्राभिधानात् ।

1 "उपसहार –" इत्यादि द्विसूत्र द्वितीयमधिकरणम् । "आध्यानाय –" इति सप्तम चतुस्सूत्रमिति (१५–१८) इति पूर्वप्रस्तुतम् । "सर्वाभेदात्–" इति चतुर्थे द्वितीयम् । "प्राप्तेश्च समञ्जसम्" इति प्रथमम् । आद्यमपहाय द्वितीयग्रहण तु भाष्ये तस्य मुखतो व्याख्यानात् । "सम्बन्धादेवमन्यत्रापि" इति दशमाधिकरणम् । "सर्वे गुणा सर्वदैव ह्युपास्या " इत्युपसहारे श्रुति । "आप्त्वा धिया ध्यानार्थं हि सर्वे गुणा उच्यन्ते" इति सप्तमाधिकरणे तत्त्वदीपिका । "गुणास्त्रैविक्रमाद्याश्च सहर्तव्या न सशय । विरिञ्चस्यैव नान्यस्य स हि सर्वगुणाधिक " इति दशमाधिकरणे भाष्ये बृहत्तन्त्रवचनम्।

2 'ब्रह्मणा तु' इति भाष्यस्यार्थं उच्यते – सर्वाधिकार्यधिपतिना चतुर्मुखब्रह्मणेति । नैवान्यैरिति च । "तु स्याद् भेदेऽवधारणे" इत्यभिधानात् ।

१ "इत्यादिसर्वो –" ग

२ "एत उपास्य –" ग

३ "पूर्वोक्तगुणा " घ

४ " – पूर्णगुणै –" ग

१सामान्याधिकारिभिरेवमुपास्य. । "सम्पूर्णोपासनाद् ब्रह्मा सम्पूर्णानन्दभाग् भवेत् । इतरे तु यथायोगम् –" (पाद्म०) इति वचनात्[1] ।

क्रियादीनां विशेषसामान्यविभागश्चानुव्याख्यायां व्याख्यात· – "ब्रह्मा सर्वैर्गुणैश्चैव क्रियासामान्यतश्च गीः । गुणसामान्यतो रुद्रो द्रव्यसामान्यत. परे" (३.३.१७१) इति । तदर्थश्च नयचन्द्रिकाया२ गुरुभिरेव व्यक्तं विवृतः–

"ब्रह्मेत्यादेरयमर्थ.– ब्रह्मा तु सर्ववेदोदितै· सर्वविशेषसहितैर्गुणक्रियाशाद्यात्मकै· सर्वैर्गुणै· सहितत्वेन विष्णुमुपासीत । ब्रह्माणी तु तत्र क्रियाणां सामान्यत उपास्ति कुर्यात् । अन्येषां विशेषत एव । यथा घटस्रष्टा पटस्रष्टेत्यादिविशेषान् विना सर्वस्रष्टेत्यादीनाम् । रुद्रो गुणाना सामान्यत

अत्र तुरवधारयन्नयोग च व्यवच्छिनत्ति । इतराधिकारिभ्यो भेद च बोधयति । स च भेद "इयदामननात्" (३ ३ ३५) इत्यष्टादशेऽधिकरणे पञ्चभि· सूत्रै सूत्रित । तेनैतदप्यधिकरण भाषित भवतीति वक्ष्यति । "स ह्येषा भूताना वरिष्ठो नह्यस्मात् कश्चनोपरि विना नारायण देव देवी च परमा श्रियम्" इति हि श्रुति । विष्णोस्तत परत्व तु "एष तु वा अतिवदति" इति श्रुतौ तुशब्देन विशेषणादेव ज्ञायत इत्येतदपि तुशब्देनैव स्फोरयामास । नित्यमुक्ताया श्रिय सकाशादस्य वैलक्षण्य च तुशब्देनैवाऽह । "देवी च परमा श्रियम्" इति श्रुते । तथाच "कामादितरत्र तत्र चाऽयतनादिभ्य "(३ ३ ४०) इत्यादि त्रिसूत्रमेकोनविंशमप्यधिकरण कृतार्थम् । "सर्वायतना सर्वकाला सर्वेच्छा न बन्धका सैषा प्रकृति" इति च श्रुति । एतदपि टीकाकृतोपरिष्टात् विव्रियते ।

1 एतेन सर्वाभेदात् सर्वगुणाना भगवदभेदेनोपासनात् ब्रह्मा अन्यत्र इतरविलक्षणे सम्पूर्णानन्दलक्षणे मोक्षे भवतीति सूत्र व्याकृत भवति । कथ तर्हि बहुवचनमिम इति? गतभाविब्रह्मणा बहुत्वात् ।

१ "साधारणाधि –" ख

२ "– काया व्यक्त गुरुभिरेव निरूपित" क

उपास्ति कुर्यात् । यथा घटज्ञ. पटज्ञ इत्यादिविशेषान् विनैव सर्वज्ञ इत्यादि । किमुत क्रियाणाम्? द्रव्याणां तु विशेषत एव । क्रियादीनामपि गुणान्तर्भूतत्वे सत्यपि ज्ञानादीना गुणशब्देन पृथगुक्तिर्ब्राह्मणपरिव्राजक-न्यायानुसारात् । परे पार्वत्यादयो द्रव्याणा भगवद्रूपाणामपि सामान्यत उपास्ति कुर्युः । किमुत गुणक्रियाणाम्" इत्यादि ।

अत्र तुशब्दाद् ब्रह्मणा दोषाभावैश्चाखिलैरुपास्यः । तदन्यैर्यथाक्रम सामान्यत एव गुणोक्तन्यायवत् । तुशब्दस्त्वधिकारीयत्तां च सूचयति "इयदामननात्" (३.३.३५.) इति सूत्रिताम् । अथ यावन्तोऽनन्तगुणा[1] ब्रह्मणा गुणिनि हरावुपसंह्रियन्ते [2]तावतस्तावतोऽनन्तगुणास्तदनन्तगुणेष्वपि प्रत्येकमुपसहृत्यैव नित्यमुक्ताऽपि प्रकृति· स्वेच्छयैव स्वपति विष्णुमुपास्ते । न केवल विरिञ्चवद् गुणिन्येवानन्तगुणानुपसहृत्य । सन्त्येव ह्येकस्मिन्नपि[3] गुणे पुनरप्यनन्तास्तद्विशेषगुणयुक्ताः । तथाहि – ब्रह्मणोपसह्रियमाणेषु क्रियाविशेषगुणेष्वेको गुणो घटस्रष्टृत्वं हि । तस्मिन्नेव गुणे [4]तत्परमाणुस्रष्टृत्वाद्यास्तद्विशेषगुणाः पुनरनन्ता युज्यन्ते । एकघटपरमाणूनामपि घटादिद्रव्यवदनन्तत्वात्, तदेकपरमाण्ववयवानामपि[5] तत्परमाणुवदनन्तत्वात्, तदेकावयवानामपि तद्वदनन्तत्वमित्यपर्यवसिति· । नच परमाणुर्निरंशः । दशदिक्सम्बन्धान्यथानुपपत्त्या शून्यत्वाभावान्यथानुपपत्त्या कार्यप्रथिमान्यथानुपपत्त्या च परमाणुरपि सांश एवेति सिद्धेः । तस्मादनन्तपदार्थेष्वेकैकस्मिन्नेव वस्तुन्यपर्यवसितविशेषावस्थापकत्वाद्या[6]स्तत्तद्विशेषगुणा अपर्यवसिता एव परमेश्वरस्येति निश्चीयन्ते । नच

---

१ "–गुणा गुणिनि" ग
२ "तावत्तावतो–" क ख ग
३ "–स्मिन्नेव गुणे" क
४ "–गुणे तत्तत्पर–" घ
५ "–परमाण्ववयवानामपि तद्वदनन्त्वमित्य–" ग
६ "–द्यास्तद्विशेष–" ख

तेषामल्पत्वमेवेति शङ्क्यम् । अणोरणीयस्त्वेऽप्यैश्वर्यातिरेकेण महतोऽपि महीयस्त्वोपपत्ते । तथाचोक्तमनुव्याख्याने "– ते चाखिलविलक्षणा । सर्वे सर्वगुणात्मन. सर्वकर्तार एव च । तथाऽपि सविशेषाश्च –" (३.२.१६७-८.) इत्यादि । नच देव्या अप्येवमे[1]वमुपासीतेति विधिविज्ञेय । नित्यमुक्तत्वेन तदतीतत्वात् । [1]कादाचित्कमुक्ता अपि कृतकृत्यत्वात् स्वेच्छयैव[2] ह्युपासते, कर्म वा कुर्वन्ति। अत[3] एव ह्यधिकारीयत्तामुक्त्वैव प्रकृतिप्रस्ताव कृत ॥ ० ॥

अथ येषामेवमुपासीतेति विधिविज्ञायते बद्धत्वात्, तैस्तदर्थं कि कार्यम्, उपास्य वा किमेषा स्यादित्यनयोरुत्तर वितरति – [2]"सर्ववेदान्तप्रत्यय चोदनाद्यविशेषात्" (३.३ १), "प्रदानवदेव तदुक्तम्" (३.३.४४.), "लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि" (३ ३ ४५.), "पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानस-

१ नित्यमुक्तत्वेनेतरवैलक्षण्यात् तुशब्देन प्रकृता रमा अखिलैर्गुणैरनन्तविशेषैर्हरिमुपास्त इति प्रस्तुतम् । इदानी तत्प्रस्तावात् कादाचित्कमुक्ता अपि तेनैव तुनोच्यन्त इत्याह – कादाचित्केत्यादि । एतेन "हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्" (३ ३ २७) इति द्विसूत्र चतुर्दशम्, "छन्दत उभयाविरोधात" (३ ३ २८) इति त्रिसूत्र पञ्चदश चाधिकरण सगृहीतम् । एतत्सग्रहायैव च "कर्म वा कुर्वन्ति" इत्याह । कर्म कुर्वन्ति, नवा कुर्वन्ति । "स्वेच्छया कुर्वन्ति नवा" इति भाष्यात् ।

२ "सर्ववेदान्त –" इत्यादि (१–५) पञ्चसूत्री प्रथममधिकरणम् । "प्रदानवदेव –" इत्येकविंशम् । "लिङ्गभूयस्त्वात् –" इत्यादि त्रीणि सूत्राण्येकमधिकरण द्वाविंशमिति भाष्यमतमिति भाति । प्रतनकोशेष्वत्राधिकरणभेदस्यानुल्लेखात् । तथाऽपि न्यायमालायाम् –" पुसाम्य प्राप्तसन्त्याग " इति, "विशेषोक्तिरमानत्वम्" इति च पृथगेव पूर्वापरपक्षयुक्तिकथनात्,

१ "अप्येवमुपा –" ख
२ " – यैवोपासते" ग
३ "एवाधिकारी –" क ख ग

वत्" (३.३.४६), "तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्" (३.३.४३.) इत्यधिकरणानि। "**सर्ववेदैश्च सर्वैरपि यथावलम्। ज्ञेयो विष्णु**" इति। स्वस्वयोग्योपासनर्थं सर्वैरप्यधिकारिभिर्यथाशक्त्यधीतैः सर्ववेदैर्यथाशक्ति विचार्यमाणैः सर्ववेदान्तैश्च विष्णुः सम्यग् ज्ञेय। चशब्दात् तदनुकूलतर्कैश्च[1]। नह्यज्ञातस्योपासनं कर्तुं शक्यम्। [2]तच्च ज्ञानमाचार्योपदेशशक्त्यनुसारेणैव[१] भवति। [3]तथैव स्वोत्साहशक्त्यनुसारेण च। [4]गुरूपदेशस्तु

---

तदनुसारेण "लिङ्गभूयस्त्वात्–" इत्येक सूत्रमेकमधिकरणम्, "पूर्वविकल्प –" इत्यादि द्वे च सूत्रे अपरम्। त पक्ष विवक्षित्वाऽत्र ते सूत्रे उल्ललेखेनि सुवचम्। अध्यायपादयोरिवाधिकरणानामनियते। "विद्यैव निर्धारणात्" (३ ३ ४८) इत्यादि त्रिमूत्र त्रयोविशमधिकरण पुर्व व्याख्यातम्–"ज्ञानेनैव पर पदम्" इति। "तन्निर्धारण–" इत्यादि विशमधिकरणम्।

1 तथाच श्रुति –"नानावेदैरितिहासै पुराणै सुज्ञेय एको भगवान् युक्तिभिश्च" इति। "सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान्" इति स्मृतिश्च। तदनेन प्रथमाधिकरणार्थ उक्त।

2 मूले यथावलमिति यथोपदेशबलमित्यर्थ। तेन "प्रदानवदेव–" इति व्याख्यातमित्याह–तच्चेत्यादि। "आचार्यवान् पुरुषो वेद" इति श्रूयते।

3 यथाबलमिति यथोत्साहबलमिति चार्थ। तेन "लिङ्गभूयस्त्वात्–" इत्यपि व्याख्यातमित्याह–तथैवेत्यादि। प्रसादानुगृहीतेन स्वप्रयत्नानुमारेण। नच प्रसादमात्रेण पूर्यते। यद्यपि गुरुप्रसादो बलवान्। "तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये" इति स्मरणात्।

4 इदानी "पूर्वविकल्प –" इत्यादि व्याख्याति–गुरूपदेशस्त्वित्यादि। यथाबलमिति यथागुरुप्रसादबलम्। यथाबल पूर्व उत्तरो वा। तत्र उत्तमगुरुणा यथात्मबल शिष्यग्रहण उपदेशे च सति तदनुसारेण वेदैर्ज्ञेय। उत्तमगुरोरलाभे यथात्मबल स्वयमेव वेदैर्ज्ञेय। तदेतदुक्तमनुव्याख्याने–"मतिश्रुतिध्यानकालविशेष गुरुरुत्तम। वेत्ति तस्योक्तिमार्गेण कुर्वत स्याद्धि

---

१ "–सारेण भवति" क

तत्प्रसादबलानुसारेण हि सफलो लक्षित । समग्रानुग्रहबलानुसारेण गुरुरपि पूर्वप्राप्त उत्तरो वेति निर्णीयते । तत्रोत्तमगुरोरात्मशक्त्यनुसारेण शिष्यग्रहणं शक्यम् । अवरस्य तूत्तमानुज्ञा[1]बलानुसारेणेति विशेषः । [1]शिष्यस्यापि

दर्शनम्" (३ ३ ७२) इति, "स्वतोऽधिकाभावे स्वयमेव समभ्यसेत्" (३ ३ ७७) इति च । यथाबलमिति यथानुज्ञाबलमिति चार्थ । उत्तमानुज्ञयाऽवरेणाऽपि क्वचित् गुरुणा कृत उपदेशे तदनुसारेण वेदेर्ज्ञेय । "समग्रानुग्रहाभावात् सत्यकाम स्वक गुरुम् । ऋषभाद्यनुज्ञया चैव प्राप तस्माद्धि युज्यते" इति च भाष्ये । "असमग्रानुग्रहे तूत्तमस्य तदनुज्ञयाऽवर प्राप्य" इति तत्त्वदीपिका । उपलक्षणमिद सदृशगुरोरपि । सदृशयो पूर्वपरयो पूर्वानुज्ञयैव पर प्राप्य । "समे विकल्प एव स्यात् पूर्वानुज्ञा च सर्वथा" (३ ३ १८६) इति ह्यनुव्याख्याने ।

1 यथाबलमिति यथास्वयोग्यताबलमिति च व्याख्याति – शिष्यस्यापीत्यादि । एतेन – "यावदधिकारमवस्थितिराधिकारिकाणाम्" (३ ३ ३३) इति द्विसूत्र सप्तदश चाधिकरण व्याख्यात भवति । तथाहि भाष्ये – "ज्ञान चोपासन चैव मुक्तावानन्द एव च । यथाधिकार देवाना भवन्त्येवोत्तरोत्तरम्" इत्यध्यात्मवचनम् । "तारतम्य विमुक्तिगम्" इति पूर्वमप्येतत् कटाक्षितम् । एतेनैव "पुरुषविद्यायामपि चेतरेषामाम्नानात्" (३ ३ २५) इत्यादि द्विसूत्र त्रयोदश चाधिकरण भाषितप्रायम् । योग्यतावशादुपासनाभेद इति हि तत्राप्युच्यते ।

"एक आत्मन शरीरे भावात्" (३ ३ ५५) इत्यादि द्विसूत्र सप्तविंशमधिकरणमप्यत्र लेशत स्पृष्टम् । अशाशिनोरेकत्वादनादियोग्यतावशादेव फलमिति हि तत्राप्युच्यते । "नाना शब्दादिभेदात्" (३ ३ ६०) इत्येकत्रिंश स्फुटमेव भाषित भवति । "शब्दोऽनुमा तथैवाक्षो योग्यताभेदत सदा । ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि" इति हि तदर्थ ।

यथाबलमिति यथेच्छाबलमिति व्याख्याने च "विकल्पो विशिष्टफलत्वात्" (३ ३ ६१) इति द्वात्रिंशम्, "काम्यास्तु यथाकाम समुच्चीयेरन्

१ "तूत्तमाज्ञा –" क ग

स्वयोग्यताबलानुसारेणैव स्वोत्साहस्तत्त्वज्ञानसग्रहस्तत्फल च स्युः । [1]तस्मादाचार्यवर्यत[१]स्तत्परिचर्यापूर्वक सच्छास्त्रश्रवणादि कृत्वा तत्तदज्ञानसशयादीन् व्युदस्य परोक्षत एव भगवान् प्रथमतो ज्ञेय. । अपिचैव सर्ववेदार्थ[२]वित्त्वाद् यथायोग्य सर्ववेदशब्दितै सर्वाधिकारिभिर्यथात्मध्यान[३]बलमपरोक्षतोऽपि[४] भगवान् विष्णुर्ज्ञातुं शक्यः स्यात्[2] । एतदेव ह्यपरोक्षज्ञान मोक्षसाधनमिति निर्धारितम्[3] ।। ० ।।

---

नवा पूर्वहृत्वभावात्" (३ ३ ६२ ) इति त्रयस्त्रिश चाधिकरणे व्याख्याते एव ।

1 "तन्निर्धारण –" इत्यादि व्याख्याति – तस्मादित्यादि । "श्रुत्वा मत्वा तथा ज्ञात्वा तदज्ञानविपर्ययौ । सशय च पराणुद्य लभते ब्रह्मदर्शनम्" इति हि ब्रह्मतर्के ।

2 यथाबलमित्येतत् यथाभक्त्यादिसाधनसम्पद्बलमिति च व्याख्येयम् । ता विना केवलश्रवणादिनाऽपरोक्षानुदयात् । तदेतदाह – "अनुबन्धादिभ्य " (३ ३ ५१ ) इति चतुर्विशमधिकरणम् । अनुबन्धो भक्ति । "भक्त्यैवैन जानाति, भक्त्यैवैन पश्यति, भक्त्यैव बन्धाद् विमुच्यते" इति हि श्रुति । "तद्भक्तितारतम्येन" इति पूर्वमप्येतत् कटाक्षितम् । एतेनैव "परेण च शब्दस्य ताद्विध्य भूयस्त्वात् त्वनुबन्ध " (३ ३ ५४ ) इति षड्विंश चाधिकरण समग्राह्येव । भक्ते करणत्व हि तत्रोच्यते ।

3 निर्धारित "ज्ञानेनैव पर पदम्" इति पूर्वमेव । ज्ञानेन पर पद यात्येव इति चान्वय । तेन "अनियम सर्वेषामविरोधाच्छब्दानुमानाभ्याम्" (३ ३ ३२ ) इति षोडश चाधिकरण गतार्थम् ।

---

१ " – वर्यत परिचर्या – " क

२ " – वेदान्तार्थ – " क

३ " – भिर्यथाध्यान – " ग

४ " – तोऽपि विष्णु – " क

"यथाबलं ज्ञेय." इति सामान्यत उक्तं ज्ञानविशेषं विस्पष्ट चाऽह – [1]"प्रज्ञान्तर-पृथक्त्ववद् दृष्टिश्च तदुक्तम्" (३.३.५२) इत्यधिकरणम् । "विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्" इति । मनुष्यादीनामुपासनाया यद्वदुत्तरोत्तर विशेष उक्तस्तद्वदेव तेषामपरोक्षज्ञानेऽपि तज्जन्ये यथाक्रममुत्तरोत्तरमाधिक्यं नाम विशेष. स्यात् । तुशब्दात् तत्फलेऽपि मोक्षे तद्वद् विशेष स्यात् । [2]देशकाल-विशेषाच्च तेषा ज्ञाने[१] विशेष इष्यते । देहाद् बहिरन्तः सर्वत्र च ब्रह्माण्डे तदावरणे च तद्बहिश्चेति देशतो विशेष. । तज्जन्मनि तन्मन्वन्तरे तत्कल्पे च तत्परे[२] तत्पूर्वपरे ततोऽपि पूर्वस्मिन्नित्यादिक· कालतो विशेष. । उभयतोऽप्युत्त-रोत्तरमाधिक्येनैव तेषा ज्ञान जायत इत्यर्थ. ।। ० ।।

एवञ्चै[३]तादृशमोक्षसिद्धये यथाशक्त्युपासन कार्यमिति पादाभिप्राय ।। ० ।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
तृतीयाध्यायस्य तृतीय पाद

---

1 "प्रज्ञान्तर –" इत्यादि द्विसूत्र पञ्चविशमधिकरणम् ।

2 तथाहि भाष्ये – "अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टय सर्वदृष्टय इति । देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तरमाब्रह्मणोऽन्येषु तु यथायोगम्" इति कमठश्रुति ।" दृष्टचैव ह्यवताराणा मुच्यन्ते केचिदञ्जसा । दर्शनेनाऽन्तरे-णान्ये देवा सर्वत्र दर्शनात्" इत्यध्यात्मवचनम् । "अन्यया विद्यया मुक्ति सुराणामन्यया नृणाम् । तत्रापि योग्यताभेदात् प्रतिभेदा अवान्तरा" इति मानसहितायाम् । "समोऽपि भगवान् स्वबिम्बदर्शन एवैन मोचयति" इति च श्रुति ।

---

१ "ज्ञान विशिष्यते" ग

२ " –परे ततोऽपि पूर्वपरे ततोऽपि" क

३ "एवञ्च तादृग –" क ख ग.

## ॥ तृतीयाध्यायस्य चतुर्थः पादः ॥

ॐ॥ उक्तोपास्तिसिद्धस्य भगवदपरोक्षज्ञानस्य स्वभावसामर्थ्यमस्मिन् पाद उच्यते ।

साधनान्तरविरोधेऽपि मोक्षपर्यवसायित्व स्यादेवास्येति प्रत्याययितुम् – "पुरुषार्थोऽत. शब्दादिति बादरायण." (३ ४ १.) इत्यधिकरणम्[1] । **"सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशय."** इति । यदेतदुक्तोपास्तिसिद्धं निर्दोषं विष्णुविषयमपरोक्षज्ञानं तस्मादेव ज्ञानात् साधनान्तरमन्तरेणापि पुरुषार्थाश्चत्वारोऽपि स्यु. । तद्दर्शिनामिति शेष । तत्राप्यधि[१]कानामाधिक्येनेति विशेषः प्रागेव तुशब्दात् सूचित । स्वस्वजात्यनुसारेण प्रारब्धकर्माननिति[२]क्रम्येत्यपि विशेषो ग्राह्य । अपिशब्दो जैमिन्यादिमतेषु[३] विवक्षितविशेषसूचक.[४] । ज्ञानादेव मोक्षो[५] नान्यद्वारेण स्यात्, स्वर्गादयः कर्मद्वारेणेति हि [६]तद्विशेषः । तर्हि तत्पक्षे मोक्षोऽपि कर्मद्वारेणैव स्यादिति च सशयो मा भूदित्यभिप्रायेण "न सशय·" इत्युक्तम् ॥ ० ॥ १ ॥ ० ॥

---

1 "पुरषार्थं –" इत्यादि नवसूत्र प्रथममधिकरणम् । "ज्ञानेनैवाऽप्यते सर्व कर्मणा त्वधिक भवेत् । इति प्राह महायोगी पुमर्थाना विनिर्णयम्" इति पुराणवचनम् ।

---

१ "तत्राप्यधिकाराधिक्येंन विशेष" ग

२ "–कर्माति–" ख

३ "जैमिन्यादिषु विवक्षित –" ख

४ "अपिशब्देन जैमिन्यादिमतेषु विवक्षितविशेष सूचित ।" ग

५ "मोक्षोऽनन्यद्वारेण" ख

६ "–णेति तद्वि–" क ख ग

[1]नचैतादृशे ज्ञाने सर्वजन्तवोऽधिकारिण. शङ्क्या. । सोम इव कियन्त एवेति विभागश्रवणात् । एवं चेत्[1] किलक्षणास्त इति चेत्, "सर्ववेदैश्च ज्ञेय." इति पुरस्तादुक्तत्वादध्ययनवन्त एव ज्ञानाधिकारिण इति साधित भवति। "यथाबलम्" इति विशेषणात् तत्तारतम्यं च तत्रैवोक्तम् । [2]नचानधिकारिणस्तज्ज्ञानं क्वचित् गृह्णन्ति । सर्वथाऽपि स्वभावस्यानभिभवात्[3] । अधिकारिभिरप्यत्यधिकारं न

1 "असार्वत्रिकी" (३ ४ १०.) इत्यादि चतुस्सूत्र द्वितीयमधिकरणम् । तत्र प्रथमसूत्रार्थमाह – नचेति । "विभाग शतवत्" (३ ४ ११ ) इति सूत्रार्थ सोम इवेति । "नवकोटचो हि देवाना तेषा मध्ये शतस्य तु । सोमाधिकारो वेदोक्तो ब्रह्मणो द्वे शताधिके । यथा तथैवासङ्ख्येया प्रजास्तासु कियान् जन । ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसश्रय" इति स्मृति । "अध्ययनमात्रवत" (३ ४ १२ ) इति तृतीयम् । तदेतत् पूर्वपाद एव भाषितमित्याह – एवमित्यादि । "नाविशेषात्" (३ ४ १३ ) इत्यपि व्याख्यातमेवेत्याह – यथाबलमित्यादि ।

2 "सर्वथाऽपि तु त एवोभयलिङ्गात्" (३ ४ ३४ ) इति सप्तसूत्रमेकमधिकरण चतुर्थम् । तदेतन्निर्वक्ति – नचेत्यादि ।

3 तथाच सूत्रम् – "अनभिभव च दर्शयति" (३ ४ ३५ ) इति । "अन्तरा चापितु तद्दृष्टे" (३ ४ ३६ ) इति च । तदेतत् "अपि स्मर्यते" (३ ४ ३७ ) "असुरा आसुरेणैव स्वभावेन च कर्मणा । ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् । देवा दैवस्वभावेन कर्मणा चाप्यसशयम् । सम्यग् ज्ञानेन परमा गति गच्छन्ति वैष्णवीम् । नानयोरन्यथाभाव कदाचित् क्वापि विद्यते । मानुषा मिश्रमतयो विमिश्रगतयोऽपि च" इति । तदेतद् यथाबलमिति व्याख्यातमेव । यस्माद् यथाधिकारमेव ज्ञेयो विष्णुस्तस्मादनधिकारिभिर्न ज्ञेय इति । नन्वधिकार सम्पाद्यते । ततश्च विष्णुर्जिज्ञास्यते । नेत्याह – यथाबलम् । स्वभावाख्याया स्वरूपशक्तेरनतिक्रमणीयत्वान्नानधिकारिभिरसुरादिभिरय सुज्ञेय इति । ननु यथाबलमिति

१ "एवञ्च किलक्षणा –" क

किञ्चिदप्याकाङ्क्षम्' । पतनप्रसङ्गात्[1] । तस्माद् योग्य एव सन्नयोग्येष्वनाविष्कुर्वन् योग्यायैव तद्योग्योपास्तिमुपदिशेत्[2] । तच्चास्य साक्षाद् बिम्बरूपं ह्युपासितु योग्यम् । बिम्बद्वारभूत एव च तदुपदेष्टुं योग्यः । प्रतिबिम्बभूत एव च श्रोतुम् । सामान्ययोग्यताया च सामन्योपदेशादि' सम्भवेत् । उक्तलक्षणहीना एव ह्ययोग्या. । अत एव हि "मानुषैस्तु", "ब्रह्मणा तु" इत्यादिना तत्तद्योग्योपास्तिमुक्त्वा तुशब्दाभ्यामाद्यन्तयोरधिकारितावत्तां सूचयाम्बभूव ॥ ० ॥ २ ॥ ॥ ० ॥ ४ ॥ ५ ॥ ० ॥ ८ ॥ ० ॥

---

हेतुमाह । प्रतिज्ञा तु कुतोऽवगता नानधिकारिभिरसुरादिभिरय सुज्ञेय इति । किं समुच्चीयते? उतस्वित् स्वकपोलादानीयते? नोभयमपि । किन्तर्हि? अध्याह्रियते । अध्याहारे सर्वोऽपि सर्वस्यार्थो भवेत् । न भवेत् । उक्त हि "सावकाशे न तद् भवेत्" इति । का प्रतिपत्ति ? प्राप्ते हि पूर्वपक्षे सिद्धान्त प्रसरति । स्फुरितपूर्वपक्षस्य हेतुकथने नञ्गर्भे सिद्धान्तोऽपि स्फुरत्येव। तत्र किमनधिगतम्? येषा पूर्वपक्ष एव न स्फुरति तेषा महता मुखेन सिद्धान्तकथनेऽपि किं फलम्? नहि मृत्पिण्डबुद्धिभि शास्त्रमधिक्रियते ।

1 एतेन अधिकारिभिरप्यधिकारानतिक्रमेणैवोपास्य इत्यभिदधत् "नचाऽधिकारिकमपि पतनानुमानात् तदयोगात्" (३ ४ ४१ ) इत्यादि त्रिसूत्र पञ्चममप्यधिकरण व्याख्यात भवति ।

2 एतेन "अनाविष्कुर्वन्नन्वयात्" (३ ४ ४६ ) इत्यष्टममधिकरण गृहीतार्थम् । न केवल ज्ञान यथाबलम्, किन्तु ज्ञापन च यथाबलम् । श्रोतुर्योग्याता यावती तावदेवोपदेष्टव्यम् । अयोग्याना तु नोपदेष्टव्यमेव । तथाचोक्त न्यायविवरणे – "नचाऽविष्कारेण कथनादशेषतोऽपि योग्या ज्ञानिनो भवन्तीत्यास्थानचत्वरादिषु स्थित्वैव प्रकथनीयम् । नह्येव त्वरमाणे सिद्धिर्भवति । अयोग्यानामपि श्रवणप्रसङ्गात् । तस्माद् विचार्य योग्यानामेवात्वरयैव कथित्वा सिद्धिर्भवति" इति । "त्यक्त्वा त्वरा ब्रह्मविद्या वदेत जनाय योग्याय सदैव विद्वान् " इति च श्रुति ।

---

१ "किञ्चिदाकाङ्क्ष्यम्" क

[1]"स्तुतयेऽनुमतिर्वा" (३.४ १४) इत्यादीनि कामचारश्रुतिसूत्राणि व्याख्याति– "न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित्" इति। अपिच प्रारब्धकर्मवशात्[१] क्रियमाणै. कामक्रोधादिभिर्ज्ञानदोषै कर्मदोषैश्चाज्ञानिवदपरोक्षज्ञानी न लिप्यते च । यल्लेपे तत्सामर्थ्याद् यथोक्तकालेऽपि मोक्षाभावः प्रसज्येत । कामचारवादभक्षादिसर्वदोषाणामपि ज्ञानफलप्रतिषेधशक्तिर्न स्यादित्यर्थ [2]।।०।।

एव सति गुणदोषाणामाचरणे वर्जने वा न कश्चिद् विशेषस्तस्येत्यत आह– "शमदमाद्युपेत. स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्" (३.४.२७.), "शब्दश्चातोऽकामकारे[२]" (३.४.३१.) इत्यादीनि[3] सूत्राणि व्याख्याति– "गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ" इति । यद्यपि ज्ञानादेव[३] मोक्षसिद्धिर्नियता तथाऽपीत्यपिशब्दार्थ. । ज्ञानिनः [4]श्रुतिविहितैः शमादिगुणैर्वर्णाश्रमधर्मसहितैर्यथाशक्त्यनुष्ठितैर्ज्ञानैकफले मोक्षे सुखस्य वृद्धिः स्यात् । श्रुतिनिषिद्धैर्ब्रह्महत्यादिदोषैर्यथाकाम[४]माचरितैस्तस्य ह्रासश्च

1 "स्तुतये –" इत्यादि तृतीयमधिकरणम् । विशतिरत्र सूत्राणि (१४–३३)।

2 "कामचारा. कामभक्षा कामवादा कामेनैवेम देहमुत्सृज्याथ परात्परमीयु" इति श्रुति । "कामकारेण चैके" (३ ३ १५) इति सूत्रम् । "कामकार कामितचरणम् । तत् कामचारभक्षवादेषु त्रिष्वपि समम्" इति तत्त्वदीपिका ।

3 इत्यादीनि यानि सूत्राण्याह तानि व्याख्याति ।

4 "एतमात्मानमभिपश्य शान्तो भवेत्" इति, "पश्यन्नपीममात्मान कुर्यात कर्माविचारयन् । यदात्मन सुनियतमानन्दोत्कर्षमाप्नुयात्" इति च श्रुतिविहितै ।

१ "–कर्मादिवशात्" ग

२ "–श्चातोऽकामचारे" क ख ग

३ "ज्ञानेनैव" क

४ "कालमाच –" क

स्यात्[1] । वृद्धिह्रासौ तु यथालभ्यस्यापि ज्ञानफलस्य पुनर्महत्त्वाल्पत्वापत्ती एव । तस्माद् ब्रह्मदर्शिनोऽपि गुणानुष्ठान दोषवर्जन चावश्यं कार्यम् ।

अत्राय च विशेषो गवेषणीय.[2] – बहुज्ञस्य हि देवगणस्य गुणाचरणप्राचुर्यं दृश्यते । अतो वृद्धिरेव[१] तस्य प्रायेणानुमेया । अल्पज्ञस्य तु नरवरस्य विपर्यय-प्राचुर्याद् विपर्यय· । विरिञ्चस्य तु परिपूर्तिरेव सुखस्य प्रमाणसिद्धा । विहिता-खिलगुणानुष्ठानात् । नैवच हानि· काचिदपि[२] भवेत् । निषिद्धाखिलदोष-वर्जनात् । नीचस्य तूच्चापराधतो विशेषेण च हानिर्भवेत्[3] । अतो दूरादेव परिहरणीय· स्वोच्चापराध । परिचरणीयश्चाऽऽचार्य· । सतात्पर्यं यथाशक्ति प्रसत्त्यै विहितमेव सर्वथाऽप्यनुसरणीयम् । अनाचरणीयमेव च निषिद्ध मनसाऽपि । [3]अनापदि विशेषतोऽपि । किमर्थम्? क्लृप्तस्यापि ज्ञानफलस्य पुनः पूर्णत्वाय पुनरनल्पत्वाय चेति ।। ० ।। ३ ।। ० ।।

---

1 तथाहि श्रूयते – "एतावतोऽधिका नास्ति प्राप्तिरित्यन्तत स्थिता । या स्थितिस्ता समाप्नोति यथाशक्ति प्रयत्नत । विपरीतप्रवृत्तेस्तु तस्या ह्रासोऽधिक भवेत्" इति । "आनन्दो ह्रसतेऽकार्याच्छुभ कृत्वा च वर्द्धते" इतिच पुराणम् ।

2 तदेतत् सर्व भगवताऽनुभाषितम् – "विकर्मलेपो नैवास्ति सम्यग्दृष्टिमता क्वचित् । गुणहानिश्च नैवास्ति ब्रह्मणस्त्वविकर्मत । देवानामपि न प्राय क्लृप्तस्य तु कथञ्चन । प्राप्तह्रासो भवेत् क्वापि महता तु विकर्मणा । तथाऽपि तत् क्लृप्तमेव तस्मान्न नियमोज्झिति । चन्द्रसुग्रीवयोश्चैव स्वोच्च-दारपरिग्रहात् । प्राप्तहानिरभून्नैव क्लृप्तहानि कथञ्चन । ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा । भवेन्मुक्तौ विशेषेण स्वोच्चानाम-पराधत" (अनु० ३ ४ ५–७ ) इत्यादि ।

3 "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" (३ ४ १८ ) इति सूत्र मनसि निधायाऽऽह – अनापदि विशेपतोऽपीति ।

---

१ "–रेवास्य" क          २ "कदाचिदपि" ग

३ "हानिर्भवति । " ग.

[1]"स्वामिनः फलश्रुतेरित्यात्रेय." (३.४.४४) इत्याद्यधि[१]करणार्थं वदन्नध्यायार्थमपि निगमयति – "नृणां सुराणां मुक्तौ तु सुख क्लृप्त यथाक्रमम्" इति । नरादीनां सुरान्तानां यथोक्ताल्पबहुगुणोपसहारिणामप्रारब्धप्रतिबन्धजन्मनि[2] ब्रह्मदृशां तादृग्जन्मात्यय एव मुक्तिभाजा च सता तत्र[२] मुक्तौ यथाजातिक्रम सुख क्लृप्तम्, एषामियदेषामियदिति । तुशब्दान्नरावराणामसुराणा चान्धे तमसि यथाक्रमं दुःखं क्लृप्तम् । पारिशेष्यान्नृमध्यमाना नित्यससारे यथाक्रम तदुभयमपि[३] मिश्रं क्लृप्तम्, ईशेनेति शेष· सर्वत्रापि ग्राह्यः । नच तत्क्लृप्तं क्वचित् कस्याप्यन्यथा भवति ।

---

1 "स्वामिन –" इत्यादि त्रिसूत्र (४४–४६) षष्ठमधिकरणम् । आदिपदेन "कृत्स्नभावात्तु गृहिणोपसहार" (३ ४ ४७) इत्यादि द्विसूत्र सप्तमम्, "ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्" (३ ४ ५०) इति नवमम्, "एव मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते" (३ ४ ५१) इति दशम चाधिकरण सगृह्णाति । अष्टम पुरैव व्याख्यातम् ।

2 तुशब्दसूचितौ विशेषावुच्येते – अप्रारब्धप्रतिबन्धजन्मनि ब्रह्मदृशामिति' तादृग्जन्मात्यय एव मुक्तिभाजामिति च । एतेन "ऐहिकम् –" इति नवमम्, "एवम् –" इति दशम चाधिकरण गृहीतम् ।– 'सुराणा तु' इत्यन्वयेन सर्वाश्रमित्वरूप विशेष च तुशब्द सुराणा वक्ति । तेन "कृत्स्नभावात्तु गृहिणोपसहार" इत्यादि सप्तम चाधिकरण गृहीत भवति । "देवा एव ब्रह्मचारिण" इत्याद्युक्त्वा "सर्ववर्णा सर्वाश्रमा सर्वं ह्येते कर्म कुर्वन्ति" इति ह्याह ।

---

१ "इत्यधिकर –" ग.

२ "तत्र यथाजन्मादिक्रमम्" ख

३ "–मपि क्लृप्त मिश्रम्" क. "–मपि नित्य क्लृप्तम्" ग

[1]केषा तर्हि कियत्सुखं क्लृप्तमिति चेत्, उच्यते । प्रथम [2]स्वातन्त्र्यादि-[१] गुणेष्ववराणा नराणा न्यूनम् । उत्तमानां सुराणामधिकम् । तुशब्दादत्युत्तमस्य ब्रह्मणोऽत्यन्ताधिकम्[२] । तच्चाऽनन्दश्रुत्युदितप्रकारेण शताधिक शताधिकं भवति । नहि भृत्याना स्वामिना च सता सममेव फल भवितुमर्हति[3] । तस्मादपि नराणा भृत्यवदल्पं वेतनफलम् । सुराणा क्षेत्रग्रामविषयस्वामिवत् क्रमाधिकमायफलम् । ब्रह्मण· सार्वभौमवत् करफलम् । अथ [4]सत्रयागेष्वृत्विजामिवाल्पफलमवराणाम् । यजमानानामिव महन्मध्यमानाम् । तद्गुरूणामिव महत्तममुत्तमानामिति वा । [5]शिष्याणां नृणां यथाश्रुतं स्वालम्बुद्धिगोचर सुख फलम्,

---

1 इदानी षष्ठाधिकरणप्रमेय विवृण्वन् यथाक्रममित्युदित क्रमविशेषमाह — केषा तर्हित्यादि ।

2 तथाह्यनुव्याख्यानम् — "स्वातन्त्र्यतारतम्येन फल हि फलिना भवेत्" (३ ४ २३६ ) इति ।

3 तदेतदुक्तम् "स्वामिन फलश्रुरित्यात्रेय" इति । "स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाण" इति च श्रुति । "नह्यत्र प्रजागत कर्म ज्ञान च प्रतिपिध्यते । प्रत्यक्षविरोधात् । "कर्ता शास्त्रार्थवत्त्वात्" इत्यादेश्च । किन्तु पराधीन प्रतनु चाभिप्रेयते । "स्वामी हि फलमश्नुते" इति च महत्त्वापेक्षया । अन्नवानितिवत् । "नास्वामी कर्म कुर्वाण" इति च न प्रमाणसिद्धप्रवृत्तिफलप्रतिषेध । भृत्येष्वपि वेतनादिफलोपलब्धे" इति तत्त्वदीपिका ।

4 एतेन "आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते" (३ ४ ४५) इति सूत्र विवृतम् ।

5 तथाच सूत्रम् — "सहकार्यन्तरविधि पक्षेण तृतीय तद्वतो विध्यादिवत्" (३ ४ ४६ ) इति ।

---

१ "प्रयत्नस्वातन्त्र्यादि —" क ख

२ " — धिकमित्यानन्दश्रुत्यु —" क

तद्गुरुपूर्वकाणा नृजाताना ततोऽष्टद्वयष्टादिगुणम् , तन्नियन्तॄणा देवानां सहस्र-लक्षादिगुणम् , तेषामपि नियन्तुर्ब्रह्मणो महौघगुणमित्येषा[1] हि तत्क्लृप्ति-र्गुरुवृत्तोक्ता[1] । तुशब्दोऽवधारणार्थश्च । तस्माद् यथोक्तसाधन यथाशक्त्यनु-ष्ठेयमित्यध्यायार्थो निर्णीयते ॥ ० ॥ ६ ॥ ७ ॥ ० ॥ ९ ॥ १० ॥ ० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रमग्रहभाप्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
तृतीयोऽध्याय

---

1 तथाहि गुरुवृत्ते श्रूयते – "मुक्तावष्टगुण शिष्याद् गुरुराप्नोति शोभनम् । तद्गुरुर्द्विगुण तस्मात् सार्धं तावत् ततोऽपरे । देवा सहस्रगुणित क्रमात् तस्माद् यथोत्तरम् । ब्रह्मा महौघगुणितमेव फलविनिर्णय " इति । सहस्र-महौघशब्दौ यथाक्रम परिमाणाधिक्यार्थौ ।

---

१ " – त्येषा क्लृप्ति – " क ख ग

## ॥ चतुर्थाध्यायः ॥

ॐ। उक्त साधनभेद. प्रायेण ।[१] फलमाहास्मिन्नध्याये । प्रथमपादेऽनिष्टकर्मक्षयाख्यम्[२] । नित्यशोऽत्यन्त[३] कार्यमवश्यं भाव्यं च यत् तत् साधन प्रथमतो निगद्यते[1] ।

[2]"आवृत्तिरसकृदुपदेशात्" (४.१ १.), "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" ४ १ ३ ), "ब्रह्मदृष्टिरुत्कर्षात्" (४.१ ५.) इत्यादीनि व्याख्याति – "**विष्णुर्ब्रह्म तथाऽऽदात्येवं नित्यमुपासनम् । कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम्**" इति । विष्णुः ब्रह्म परिपूर्णं, आदाता सर्वस्य स्वामीत्येवं[४]

---

1 "तस्य फलसन्निकृष्टत्वादत्रोक्ति । फलावस्थानुप्रवेशित्वाच्च" इति तत्त्वदीपिका ।

2 "आवृत्ति –" इत्यादि द्वे सूत्रे प्रथममधिकरणम् । "आत्मेति –" इत्यादि चतुस्सूत्र द्वितीयमधिकरणम् । "ब्रह्मदृष्टि –" इति द्वितीयाधिकरण एव तृतीय सूत्रम् । भाष्ये मुखतो व्याख्यानात् पृथग् ग्रहणम् । अत एव इत्यादीनीत्याह । नाधिकरणानीति । मूले "विष्णुर्ब्रह्म" इति विष्णुपदग्रहणेन "आत्मा विष्णुरिति ध्यान विशेषणविशेष्यत" इति ब्राह्मवचनम्, "ब्रह्मदृष्ट्या सदोपास्यो विष्णु सर्वैरपि ध्रुवम्" इति ब्रह्मतर्कवचन च स्मारयति।

---

१ "– भेद प्रायेण । प्रायेण फल –" क घ

२ "– पादेऽनिष्टक्षयाख्यम्" – क

३ "नित्यशोऽत्यन्तमवश्यम्" ख

४ "त्येव नित्य –" घ

नित्यमुपासनं कार्यं मुमुक्षुभिः । अयं चात्र विशेषः – यथा विष्णुर्ब्रह्माऽदाते-त्युपास्यं तथा आदाता च ब्रह्म विष्णुरित्युपास्यमित्येतज्ज्ञापनार्थं[१] तथाशब्दः । [२]एवशब्दस्त्वन्यथोपास्तिनिराकरणार्थः[1] ।

अयमिह मथितार्थः – विष्णुर्मे परिपूर्णः स्वामी, स्वामी मे परिपूर्णो विष्णुः – इत्यन्योन्यविशेषणविशेष्यतयोभयप्रकारेणाप्युपासनं कार्यम्, नत्वन्यथेति । ननु अहं ब्रह्मास्मि, ब्रह्माहमस्मि इत्येवोभयप्रकारेणोपास्यमिति[३] च मा शङ्कि । तादृगुपास्तेरन्यथाविषयत्वात् । नहि जीवस्य ब्रह्मत्वं प्रमाणसिद्धम् । पृथक्त्वस्यै-वोपदेशात् ।

सिद्धं हि [2]तत्त्वमस्यादिवाक्ये[४] तदैक्यमिति चेत्, मैवम् । तस्यातत्त्वमस्यादि-त्वात् । तथाऽपि "[3]अहं ब्रह्मास्मि" (बृह ३.५.४) इति वाक्ये कथमिति

---

1 अहं ब्रह्मेति दृष्टिर्ब्रह्मदृष्टिरित्येकेषां मतं मनसि निधायेदमुदितम् । तदेव विव्रियते – अयमिहेत्यादि । कश्चिदन्योऽपि विष्णुरिव स्वामी स्यात् विष्णुरपि स्यादिति मा भूदिति विशेषणविशेष्यतयोपासनं कार्यम् । नत्वन्यथा । न केवलं विशेषणतया विशेष्यतया वा । नापि विशेषण-प्रहाणेनाहन्तया वेति ।

2 तत्त्वमस्यादिपदघटिते वाक्य इत्यर्थः । एवमुत्तरवाक्येऽपि तस्य अतत्त्व-मस्यादिनञ्गर्भपदघटितत्वाद्भेद एव तन्मानं भवतीत्यादिरर्थः ।

3 तथाह्यव्याकृतब्राह्मणे वचनम् – "ब्रह्म वा इदमग्र आसीत् तदात्मान-मेवावेदहं ब्रह्मास्मीति तस्मात् तत् सर्वमभवत्" इति । पूर्णमभवदित्यर्थः । नह्यत्राभेदस्य वार्ताऽपि श्रूयते ।

---

१ "– नाय तथा –" क

२ "एवशब्द –" घ.

३ "– मिति मा" क

४ "– वाक्येषु" क

चेत्, तत्र हि स्वात्मानमेव तद् ब्रह्म 'अहं ब्रह्मास्मि' इत्यवेत्, नतु जीवम् । नापि जीवस्तदस्मीत्यवेत् । उपक्रमादिविरोधात् ।

नच "ब्रह्म वेद ब्रह्मैव भवति" (आथ० ३.२ ९) इत्युक्तिविरोधः । ब्राह्मणपूजकोऽपि ब्राह्मणो भवेदितिवत् तद्भाव विना तदन्त[१]र्भावस्यैव विवक्षितत्वात् । "नहि ब्राह्मणपूजकः स एव ब्राह्मणो भवति" इति हि तत्त्वनिर्णये भगवतैवोक्तम् । अपरथा[२] [1]"तदेव ब्रह्म परमम् –" (महाना० २) इत्यवधारणविरोधाच्च । तस्मान्नाह तद् ब्रह्मेत्युपास्यम् ।

[2]अपिच, यदेतदादेय चराचर विष्णोः प्रतीकमेव सत् तच्च ब्रह्मेति नोपास्यम् । तस्याप्यतद्भावात् । तस्मादस्मदुक्तप्रकारेणैव तदुपासन कार्यम् । तच्च आ

---

1 "तदेवर्त तदु सत्यमाहुस्तदेव ब्रह्म परम कवीनाम्" इति नारायणोपनिषद्ग्रहणेनैतदप्याह – यदुपरिष्टात् नस्यामेवोपनिपदि "योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि" इत्यादि तदपि व्याख्यातमनयैव दिशेति । यदेतदहेयत्वादिनाऽहमादिपदवाच्य ब्रह्म तदहमस्मि ममाप्यन्तर्यामकमिति । "सर्वान्तिर्यामिको विष्णु सर्वनाम्नाऽभिधीयते । एषोऽह त्वमसौ चेति नतु सर्वस्वरूपत" इति वचनात् । "तत्तन्नाम्नोच्यते विष्णु सर्वशास्तृत्वतो हरि" इति च । "विष्णुरादाता" इति पदे आददान आचार्य एतमर्थमेवोद्दिशति । आत्मशब्दस्य स्वरूपवचितयाऽभेदभ्रमसावकाशत्वेऽपि आदातृपदेनाऽदेयभेदस्य स्फुटमवगमात् ।

2 अत एवाऽदेयात् प्रतीकादादातुर्भेदोऽप्युदित स्यादिति "न प्रतीके नहि स" (४ १ ४) इति द्वितीयाधिकरणे द्वितीय सूत्रमपि भाषित भवतीत्याह – अपिचेत्यादिना ।

---

१ "तदन्तरभाव –" घ

२ "अन्यथा" क

दर्शनादा [1]मोक्षाच्चैवं विधीयत इति नित्यमित्युक्तम् । नचैतत् कदा-१ चिदप्युपरन्तव्यम् । किन्तु? अत्यन्तायामापद्यपि यथाशक्त्यनुष्ठेयमेव । [2]अपि-शब्दाद् देवैस्तु स्वोत्पत्त्यादिस्थान भगवदङ्ग च तादृगित्युपास्य२मिति सिद्ध्यति। स विष्णुः यथा यस्मात् स्वाङ्गान्ममाऽदाता स्रष्टा तस्मिन्नेव स्वाङ्गे ममाऽदाता स्थापयिता संहर्ता चेत्युपास्यमिति योजनयैव३ वा तत्सिद्धि । तच्चाऽदित्यादीना सृष्ट्यादिस्थान भगवदङ्ग चक्षुरादीति श्रुतम् ।

[3]ध्यानोपासनमासीनैः कार्यमिति विशेषः सर्वेषामपि सम । तेनेत्थ कृतेनोपास-नेन ब्रह्मशब्दितो विष्णुस्तेषामपरोक्षता याति । यत्तदुत्तरोत्तर सविशेषमुक्तम-परोक्षज्ञान तदनेन जायत इत्यर्थः ॥ ० ॥ १ – ४ ॥ ० ॥

---

1 आमोक्षादिनि वदता नित्यमिति भाष्यपदेनैव "आ प्रयाणात् तत्रापि हि दृष्टम्" (४ १ १२ ) इति चतुर्थमप्यधिकरण व्याख्यातमिति सूचि-तम् । "यावन्नारायण प्रति प्रयाणात्मको मोक्षस्तावदुपासनादि कार्यम्" इति हि तत्त्वदीपिका ।

2 "आदित्यादिमतयश्चाङ्ग उपपत्ते" (४ १ ६ ) इति चतुर्थमपि सूत्र भाष्येण सङ्गमयति – अपिशब्दादिति । अपिशब्दस्येतिशिरसि योजनेन लब्धोऽयमर्थ – इत्यप्युपासन कार्यमिति । शक्यमन्यथाऽपि व्याख्यातु विनैव पदच्युतिमपिपदस्येत्याह – स विष्णुरित्यादि । तथेति श्रवणाद् यथेति लभ्यते। यथेत्यानुरूप्येऽनतिक्रमे च वर्तते । य क्रममनुसृत्य सृष्टि "चक्षो सूर्यो अजायत" इत्यादि तस्मिन्नेवाङ्गे तस्य लय इत्यादि ।

3 भाष्ये उपासनमिति सर्वेषामुपपन्नमासनम्, तेन तृतीयमप्यधिकरण व्याख्यातमित्याह – ध्यानेत्यादि । "आसीन सम्भवात्" (४ १ ७ ) इत्यादि चतु सूत्र चैतदधिकरणम् । "स्मरणोपासन चैव ध्यानात्मकमिति द्विधा । स्मरण सर्वदा योग्य ध्यानोपासनमासने" इति च भाष्ये स्मृति ।

---

१ "कदाचिदुप –" क

२ "– पास्य सिद्ध्यति" क

३ "– यैव तावत्सिद्धि" क

एव साधनशेषो[१] नि शेषोऽप्युक्त. । अथेदानीं तज्ज्ञान उदितमात्रे भवत् फलमुच्यते। [1]"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" (४.१ १३ ), "अनारब्धकार्ये एव तु पूर्वे तदवघेः" (४.१.१५.), "अतोऽन्यदपीत्येकेषामुभयो" (४.१.१७.) इत्यादीनि व्याख्याति – "**प्रारब्धकर्मणोऽन्यस्य ज्ञानेन स्यात्[२] परिक्षयः । अनिष्टस्योभयस्यापि सर्वस्य**" इति । उक्तोपासनेन[३] ब्रह्मदृशा यदेतत् प्रारब्धफलमघं पुण्यं वा कर्म तस्मादन्यस्य कर्मण· पुण्यपापोभयस्याप्यनिष्टस्य ब्रह्मदृष्टचैव नाश स्यात् । तथाऽप्यनादिकालकृतस्यात्यन्तानन्तकर्मण सर्वनाशो न प्राप्यत इत्याशङ्कापरिहारार्थं[४] "सर्वस्य" इत्युक्ति । [2]ज्ञानोत्तरकालीनस्य[५] तदुभयस्यानिष्टस्याश्लेषोऽपि स्यादित्यपिशब्दार्थ ।

[3] अथवा, यत्तदिष्टापूर्तव्यतिरिक्तत्वादप्रियत्वाच्चानिष्टशब्दितमघं ज्ञानादुत्तरं

---

1 "तदधिगमे –" इत्येक पञ्चममधिकरणम् । "अनारब्धकार्ये –" इति सप्तमम् । "अतोऽन्यदपि –" इति नवमम् । प्रारब्धकर्मणोऽन्यस्येति सप्तमाधिकरणार्थ । ज्ञानेन स्यात् परिक्षय इति पञ्चमार्थ । उभयस्यापीति नवमार्थ । अनिष्टस्येति विशेषणादिदमुच्यते – यदग्निहोत्रादिकमिष्ट मोक्षे ज्ञानकार्यानन्दानुभवविशेषायेति न तस्याश्लेषविनाशाविति । "ज्ञानादेवापवर्गस्तथाऽपि यथायथा कर्म कुरुते तथातथाऽधिको भवति" इति ह्युक्तम् । तथाचाष्टममप्यधिकरण सगृहीतम् ।

2 परिक्षयोऽपि स्यात् । अपिनाऽश्लेषोऽपि स्यादित्याह – ज्ञानेत्यादि ।

3 परिक्षयपदेनैवोभयसग्रहसम्भवे किमपिनाऽऽवृत्तेन? तर्हि नथैवार्थ स्यादित्याह – अथवेति ।

---

१ "साधनविशेषो –" क ख ग

२ "ज्ञानादेव" क, "ज्ञानेनैव" ग

३ " – नेन यदेतद् ब्रह्मदृशा प्रार – " ग

४ " – शङ्कानिवृत्त्यर्थम्" क

५ " – कालीनस्यानिष्ट – " ख

पूर्वं च तदघस्योभयस्यापि[१] ज्ञानेनैव परिक्षयः स्यात् । परिक्षयो नामोत्तराघस्य परितोऽपगमात् कर्तर्यसङ्गः । पूर्वस्य भस्मीभाव इत्युभयथाऽपि स्यात् । अथोत्तरस्य परितोऽभावः पूर्वस्य क्षयश्चेत्युभयसमुच्चयो वा परिक्षयः । [1]पश्चादनिच्छाविषयत्वादनिष्टशब्दितस्य पूर्वोत्तरपुण्यस्योभयस्यापि कर्तुरपगम [२]एव परिक्षयः । किञ्च, उत्तराघविवक्षाया परिवादिषु द्विषत्सु स्वस्मादपगमः परिक्षयो नाम । पुण्यविवक्षायां परिवारेषु सुहृत्स्विति विशेषः ।

किमेतत्पूर्वमुत्तर वा पुण्यमनिष्टम्? न तावत् पूर्वम् । "सर्वापेक्षा –" (३ ४. २६ )इति विधे । नाप्युत्तरम् । अग्निहोत्रादिसूत्रविरोधात् । तस्मादभीष्टमेव पुण्यं सर्वमपीति चेत्, सत्यमकाम्यम् । काम्यमपि किञ्चित् पुनरार्जने भोजने वा सावसर चेत् तदिच्छायामिष्टम् । नो चेत् तदनिष्टम् । स्वार्जितमहासुख[३]प्रतिबन्धकत्वात् । नहि स्वालम्बुद्धिगोचरसुखे सुसाधिते सत्यपि पुनरार्जनेच्छा जायते । नैरवकाश्यात् । नापि न्यूनभोगेच्छा, पूर्ण[४]सौलभ्यात् । अतोऽनिष्टत्वात् क्षीयत एव तादृश पुण्यमपि पापवत् । तस्माद्देतद्विवक्षयैव

---

1 क्षिधातुर्निवासे गतौ च वर्तते । तत् क्षयो नामापगम । स च द्विविध । परिवादिष्वपगम , परिवारेषु चेति । तथाच श्रुति –"सुहृद साधुकृत्याम्, द्विषन्त पापकृत्याम्" इति । तदुभयसग्रहायोपसर्गयोजनमित्याह – पश्चादित्यादि । तथाच परिक्षयपदेन च अतोऽन्यदित्यादिनवममधिकरण व्याख्यातम् । अत्र "उभयस्यापि" इत्यपिशब्देन अनिष्टस्यापक्षय इव पुण्यस्य वृद्धिरपि भवतीति गम्यते ज्ञानेनैव । तेन "यदेव विद्ययेति हि" (४ १ १८ ) इति दशम चाधिकरण सगृहीतम् । तथाच श्रुति – "यदेव विद्यया करोति तदेव वीर्यवत्तर भवति" इति ।

---

१ "तदघस्य पूर्वस्यापि" क

२ "कर्तुरसङ्ग एव" ग

३ " – महत्सुख – ख

४ "पूर्णस्य सौल –" क

"उभयस्यापि" इत्युक्तम् । [1]अपिशब्दाद् ब्रह्मद्विषां पुण्यस्यापि तद्वत् परिक्षयः स्यात् ॥ ॥ ० ॥ ५–१० ॥ ० ॥

प्रारब्धकर्मक्षय· कथमित्यत आह – [2]"भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते" (४ १.१६.) इति[१] सूत्रम् । "अन्यस्य भोगतः" इति । ज्ञानस्वभावादेव परिक्षयिण उक्तादन्यस्य प्रारब्धकर्मण पुण्यादेरनिष्टत्वेऽपि भोगादेव परिक्षयः स्यात् । अनारब्धेष्टशुभसद्भावे पुनरारभ्य भुक्त्वैवास्यापि क्षपणम् । नो चेत् प्रारब्धस्य भोगत इत्येव वक्तव्यत्वात्, तत्क्षपणस्य गत्यन्तरानुक्तेश्च । अत्र परिक्षयः शोषणमल्पीकार इत्युपमर्दोऽप्युक्त एव स्यात्[3] । भोगोपमर्दाभ्यां तत्क्षपणमित्यर्थः । उपमर्दे भोगलाघवमघादे·, नो चेत् कृत्स्नभोग इत्येव विशेष· । सर्वथा तत् क्षपयित्वा हि ब्रह्म सम्पत्स्यते[२] ।

एवं सर्वकर्मक्षयवचनात् पादार्थनिगमनं च कृतं भवति ॥ ० ॥ ११ ॥ ० ॥ ० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
चतुर्थाध्यायस्य प्रथम पाद

---

1 अथचार्थान्तरमप्याह – अपिशब्दादित्यादि । एतेन "इतरस्याप्येवमसश्लेष पाते तु" (४ १ १४ ) इति षष्ठमप्यधिकरण सगृह्णाति ।

2 "भोगेन –" इत्यन्तिममेकादशमधिकरणम् ।

3 एतेन "उपमर्द च" (३ ४ १६ ) इति तृतीयस्य चतुर्थे तृतीयाधिकरणस्य तृतीय सूत्र च कटाक्षयति । "आत्मानमभिपश्योपमृद्य पुण्य च पाप च काममाचरन्तो ब्रह्मानुव्रजन्ति" इति च तुरश्रतिर्भाष्ये ।

---

१ "इति । "अन्यस्य –" क

२ "सम्पद्यते" क ख ग

## ॥ चतुर्थाध्यायस्य द्वितीयः पादः ॥

ॐ॥ यथोक्तानिष्टकर्मक्षयिणां ज्ञानिना देहमोक्षोऽस्मिन् पाद उच्यते ।

[1]"वाङमनसि दर्शनाच्छब्दाच्च" (४ २ १.), "अत एव च सर्वाण्यनु" (४ २ २.), "तन्मन. प्राण उत्तरात्" (४.२ ३ ) इत्यादीन्युत्तरोत्तरप्रवेशसूत्राणि व्याख्याति – "**उत्तरेषूत्तरेष्वेव यावद् वायुं[1] विमुक्तिगा । प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा**" इति । जीवन्मुक्ति प्रागेव गतवन्तो देवा विशिष्टामपि मुक्तिं गच्छन्तः परान्तकाल उत्तरेषूत्तरेषु स्वस्वबिम्बभूतेष्वेव[2] देवेषु प्रविश्य स्व स्व लिङ्गदेहं तत्र क्षपयित्वा चिदानन्दात्मकदेहेन तांस्तानभीष्टभोगान् भुञ्जते । यावद् वायुं प्रविशन्ति तावदन्तश्चायं प्रवेश. । नातोऽधिकः । नहि ततोऽधिकोऽधिकारी कोऽप्यस्ति[२] । इयदेवत्यामननात् । तस्मात् तत्तद्द्वारेण[३] तमेव प्रविश्य भुञ्जते । नच तत्प्रवेश विना तदन्येषा भोगः सम्भवति । लिङ्गभङ्गसापेक्षत्वात् । अतस्तदनन्तरमेव भोग इति नियम. ।

---

1 "वाङमनसि –" इति प्रथममधिकरणम् । "अत एव –" इति द्वितीयम् । "तन्मन –" इत्येक तृतीयम् । आदिपदेन "भूतेषु तच्छ्रुते" (४ २ ५ ) इति पञ्चमम्, "नैकस्मिन् दर्शयतो हि" (४ २ ६ ) इति षष्ठम्, "तानि परे तथाह्याह" (४ २ १५ ) इति नवम चाधिकरण सगृह्णाति ।

2 "बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मना तद्वशता च सर्वदा" इति चानुव्याख्यानम् । "भूतेषु देवा विलीयन्ते" इति च श्रुति । "पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्र सोम आदित्यो

---

१ "यावद्वायु" क ख

२ "कोऽप्यधिविद्यते ।" क

३ "तस्मात् तद्द्वारेण" क ख घ

अथ विकल्प. – तदन्त स्थित्वा, तद्बहिर्निर्गत्य वेति? उभयथाऽपि, "तदन्तर्बहिरेव वा" इति । पुनरपि, वाशब्दादेवशब्दाच्च पुनश्चाय नियम – प्रलये सर्वेषामप्यन्तरेव स्थिति. । पुन. सृष्टौ केषाञ्चिद् बहिरेवेति । पुनरपि वाशब्दात् सृष्टिकाले केषाञ्चिदन्तर्वा बहिर्वा इति च विकल्पो भवति ॥ ० ॥
॥ १–३ ॥ ० ॥ ५ ॥ ६ ॥ ० ॥ ६ ॥ ० ॥

एव चेत् सर्वाधिको वायु· कथ भुंक्त इत्यत आह – [1]"सोऽध्यक्षे तदुपगमादिभ्यः" (४ २.४ ) इति सूत्रम् । "वायुर्विष्णुं प्रविश्यैव" इति । अयं भाव· – सोऽयं वायुशब्दितो विरिञ्च·[2] किं स्वात्मानमेवाऽश्रित्य भुंक्ते, उत पर प्रविश्येति

---

बृहस्पतिरित्याकाश एव साध्या विलीयन्ते" इति महोपनिषत् । अत्र अग्नय इत्यग्निपुत्रा । चतुर्वेदशिखा च – "मृत्यव पृथिव्या वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्ते" इति । वायौ मारुत इति च प्रधानवायौ । "प्रधानवायुस्त्विह वायुनामा" इति ह्यनुव्याख्यायाम् । मरुत इति भूतवायव । इन्द्र सोम आदित्यो बृहस्पतिरित्यादय क्रमश प्रधानवायौ । क्रमश्चानुव्याख्याते –

"सोमस्तु वारीशयुतोऽनिरुद्ध
विशत्यसौ काममसौ च वारुणीम् ।
मा शेषदेव स गिर च सैव
वायु विशत्यञ्ज इतीह निर्णय " (४ २ १२३ ) इति,
"सूर्योऽग्नियुक्तो गुरुमाप्य तेन
शक्र सहैनेन सुपर्णपत्नीम् ।
तया सुपर्ण सह तेन वाणी
ब्रह्माणमेतद्गत एव याति" (४ २ १२६ ) इति च ।

विनायका इति विनायकपुत्रा । अग्नय इतिवत् ।

1 "सोऽध्यक्षे – " इति चतुर्थमधिकरणम् ।

2 एतदप्युक्तम् – "उमागिरीशावपि भारतीरा-
विति स्म वाग् वेदगता ब्रवीति ।

संशयः। न तावदाद्य उपपद्यते। मुख्येश्वरत्वप्रसङ्गात्। नह्यवान्तरेश्वरस्यापि[१] मुख्येश्वरत्व मनसाऽपि प्राप्तुं शक्यम्[२]। "न ते महित्वम् –" (ऋ० ७ ११.१.) इत्यादिश्रुतेः। नैव चास्य तदिच्छा जायते। "[1]न कर्हिचिन्मे मनसो मृषा गतिः" (भाग० २.६ ३३) इत्याद्युक्तेः। तस्मात् परमेवाऽश्रयं प्रविश्येति निश्चीयते। स च परो विष्णुरेव। तत्र[३] परमान्तरस्याभावोक्तेः[४]। अतः सोऽयं वायु[2]श्रीप्रेरितो विष्णुमेव प्रविश्य तत्र स्वकीयं लिङ्गशरीरं भक्त्वा, ततः सच्चिदादिशरीरत्वेन तत्पुत्रो भूत्वा, तस्मिन्नेव विष्ण्वाख्याश्रये स्थित्वा, तत्सहभोगनामकान् सर्वानपि भोगान् भुंक्ते। नच पुनस्तदन्तर्बहिर्वेति विकल्पः। ततो निर्गमेऽपि सर्गे तस्मिन्नेव रूपान्तरेण[५] स्थित्वोपपत्ते ॥ ० ॥ ४ ॥ ० ॥ ॥ ७ ॥ ० ॥ ८ ॥ ० ॥

---

अहीन्द्रपत्नीमहिप विरिञ्च-
पत्नी विरिञ्च च विमुक्तिकाले" (अनु ४ २ १२८) इति।

1 "न भारती मेऽङ्ग मृषोपलक्ष्यते
न कर्हिचिन्मे मनसो मृषागति ।
न मे हृषीकाणि पतन्त्यसत्पथे
यन्मे हृदौत्कण्ठ्यवता धृतो हरि"

इति नारद प्रति ब्रह्मवचन भागवते ।

2 "वायुमादाय सा देवी याति विष्णु परात् परम् । द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दन" इति सत्तत्त्ववचनात् । अयमेवकारार्थ । विष्णावेव प्रवेश । न पुना रमायाम् । सा तु द्वारमात्रमिति । अत्र मुक्तेर्भोगस्य च वायुपर्यन्तत्वकथनाद् रमाया नित्यमुक्तत्वेन परमपुरुषसाम्यम्, विष्णु-

---

१ "– रस्य मुख्ये –" क
२ "शक्यते ।" क
३ "तत्र पुमन्तर –" घ
४ "– वोक्ते । सोऽयम्" क ख ग
५ "रूपान्तरे स्थित्वोप –" क

[1]"अविभागो वचनात्" (४.२.१६) इति सूत्रम् । "भोगश्चैवोत्तरोत्तरम्" इति । उक्तप्रकारेण भगवन्त प्रविष्टाना तत्कामसङ्कल्पापेक्षया सत्यकामसङ्कल्पानां च सतामेतेषा योऽसौ पूर्ववाक्ये भुञ्जत इति सामान्योक्तो भोगः सोऽयमुक्तक्रमा[१]दुत्तरोत्तरमधिकाधिक[२] एव भवति । चशब्दात् सत्यकामत्वाद्यपि तथा । नच तेषामुक्तगुणतारतम्ये साम्यवाक्यविरोधः शङ्क्य. । दोषाभावसाम्यस्याभ्युपगतत्वात् ॥ ० ॥ १० ॥ ० ॥

[2]"तदोकोऽग्रज्वलनम् –" (४.२.१७.) इत्यादिकमधिकरणम् । "उत्क्रम्य मानुषा मुक्तिं यान्ति" इति । मुक्तिकालात् प्रागेव कदाचिन्मानुषलोके जाता देवाश्चात्र मानुषशब्देनोच्यन्ते । न केवलं मनुष्यचेतनाः । ते तावदुभयेऽपि ज्ञानसामर्थ्यात् [3]स्वसुषुम्नयाऽर्कसुषुम्न[3]मनुसृत्य स्वदेहादुत्क्रम्य तन्मुक्ति

---

मेवेति तस्या प्रवेशद्वारत्वमात्रकथनेनावरत्व च कथितम् । तेन "समना चामृत्युपक्रमादमृतत्व चानुपोष्य" (४ २ ७) इति सप्तममधिकरणम्, "तदापीते ससारव्यपदेशात्" (४ २ ८) इत्यादि सप्तसूत्र (८ – १४) अष्टम चाधिकरणमुपसगृहीतम् । "मत्स्यकूर्मवराहाद्या समा विष्णोरभेदत । ब्रह्माद्यास्त्वसमा प्रोक्ता प्रकृतिश्च समासमा" इति हि स्मृति· ।

1 "अविभाग –" इति दशममधिकरणम् ।

2 "तदोकोऽग्रज्वलन तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीत शताधिकया" (४ २ १७) इत्यारभ्य आपादान्त षट् सूत्राणि (१७-२२) एकमेकादशमधिकरणम् ।

3 तथाहि श्रुति –"सहस्र वा आदित्यस्य रश्मय आसु नाडीष्वातताास्तत्र श्वेत सुषुम्नो ब्रह्मयान सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति" इति ।

---

१ "–क्रमादधिक एव भवति च ।" ख.

२ "–त्तरमधिक एव" क घ

३ "–सुषुम्नामनु–" ख. ग

यान्ति । उत्क्रान्त्यैव देहर्मुक्ति[१] यान्तीत्यभिप्रायः । अस्माच्च देशादुत्क्रम्य अर्चिरादिमार्गेण गत्वा ब्रह्मलोकप्राप्तिरूपां च मुक्ति यान्ति । मोचकत्वान्मुक्ति-शब्दित ब्रह्मापि यान्ति ।

एवं स्थूलदेहिना मनुष्याणा तत उत्क्रान्त्यैव तन्मुक्तावुक्ताया सूक्ष्मदेहिना देवानां देहस्य का गतिरित्यत आह – "देहक्षयात् सुराः" इति।(प्रवे[२])ष्टारः सुराः प्रवेश्येषु देवेषु स्वदेहस्य क्षयात् तन्मुक्ति यान्तीति । देवतादेह-[३] प्रवेशकाले क्षीयते[४] । मनुष्यचेतनाश्च प्रागेवोत्क्रम्य ब्रह्मलोकं गता. कथञ्चित्[1] सुर-शब्देनोच्यन्ते । तस्मात् तेषामपि लिङ्गभङ्गो बिम्बदेवप्रवेशादिति सिद्धम् ।।
।। ० ।। ११ ।। ० ।। ० ।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
चतुर्थाध्यायस्य द्वितीय पाद

---

1 दु खप्रहाणेन सुष्ठुरमणयोगादेवेत्यर्थ । रूढमपहाय योगमात्राश्रयणात् कथञ्चित् ।

---

१ "देहमोक्षम्" घ
२ कोशेषु लुप्तम् ।
३ "–देहा" ख ग
४ "क्षीयन्ते" ख. ग

## ।। चतुर्थाध्यायस्य तृतीयः पादः ।।

ॐ।। उत्क्रान्ताना मार्गस्तद्गम्य चास्मिन् पाद उच्यते ।

[1]"अर्चिरादिना तत्प्रथिते" (४.३ १) इत्यारम्य "वैद्युतेनैव ततस्तच्छ्रतेः" (४ ३ ६) इत्यन्तानि मार्गसूत्राणि, "पर जैमिनिर्मुख्यत्वात्" (४.३.१२.), "अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च" (४.३.१५), "कार्यं बादरिरस्य गत्युपपत्तेः" (४ ३.७.), "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" (४.३ १०.) इत्यादीनि गम्यसूत्राणि चेति पादपरि[१]पठितानि सर्वाणि व्याख्याति – "**अर्चिरादि पथा वायुं प्राप्य तेन जनार्दनम् । यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात् सहामुना**" इति । अय भावः – अतीतपादे सर्वेषामप्यधिकारिणा[2] स्थूलदेहादुत्क्रमण-

---

1 "अर्चिरादिना –" इति प्रथममधिकरणम् । "वैद्युतेन –" इति पञ्चमम् । मध्ये च "वायुशब्दादविशेषविशेषाभ्याम्" (४ ३ २) इति द्वितीयम् । "तटितोऽधि वरुण सम्बन्धात्" (४ ३ ३) इति तृतीयम् । "आतिवाहिकस्तल्लिङ्गात्" (४ ३ ४) इत्यादि द्वे सूत्रे चतुर्थमधिकरणम् । एतानि पञ्च गतिप्रकारप्रतिपादकानि । "कार्यं बादरिरस्य गत्युपपत्ते" (४ ३ ७) इत्यारभ्य "विशेप च दर्शयति" (४ ३ १६) इति यावत् आपादान्त दश सूत्राण्येक षष्ठमधिकरण गम्यप्रतिपादकम् ।

2 येषामर्चिरादिपथचलन विहित तेषा सर्वेषामित्युपस्कर्तव्यम् । अन्यथा स्वबिम्बेषु देहलये गतिक्रमानवसरात ।

---

१ "पादपठितानि" घ

मस्तीत्युक्तम् । ते चात्र व्याप्तिदृष्टयोऽव्याप्तिदृष्टयश्चेति द्विविधा.[1] । तत्र व्याप्तिदृष्टयस्तु[१] ऋषिगन्धर्वप्रवरपूर्वका देवपर्यन्ता उच्यन्ते । अव्याप्तिदृष्टयो मनुष्योत्तमाद्या ऋषिगन्धर्वान्ता एव । उत्तमा अधमाश्चेति यावत् । ते तावदुभयेऽपि अर्चिरादिना पथा ऊर्ध्वं गत्वाऽन्तत.[२] विद्युत्पतिमेव पर वायुं प्राप्नुवन्ति[2] । ततस्तेनैव गमयित्रा ब्रह्माख्यं गम्यं यान्तीत्येतावत् समम् । [3]तत्र विशेषः – व्याप्तिद्रष्टार उत्तमा. साक्षात् परमेव ब्रह्म जनार्दनं प्रथमत एव यान्ति । अन्ये नरोत्तमपूर्वकाः कार्यमेव ब्रह्म चतुर्मुख तत्काले यान्ति । तत्र[३] पुनर्यावद्ब्रह्मलय स्थित्वा तल्लोकादमुना ब्रह्मणा सह गच्छन्तस्त जनार्दनमपि यान्तीत्येव विशेषः ।

[4]"अर्चिरादि" इति क्रियाविशेषणम् । तदादिप्रथितेन पथेत्यर्थः । तत्राऽदिशब्द[४]परिगृहीताश्चाऽतिवाहिकाद्या विद्यन्ते । तथाहि ब्रह्मतर्के –

---

1 एतेन "अप्रतीकालम्बनान् –" इत्यादिसूत्रप्रस्तुत प्रमेयजातमाह । "अप्रतीका देवतास्तु ऋषीणा शतमेव च । राज्ञा च शतमुद्दिष्ट गन्धर्वादिशत तथा । एतेऽधिकारिणो व्याप्तिदर्शनेऽन्ये नतु क्वचित्" इति भाष्ये गारुडवचनम् ।

2 एतेन प्रथमे चत्वारो नया सगृहीता । मूले तेनेति सव्यवच्छेदम् । तेन "वैद्युतेनैव –" इति पञ्चमोऽपि नय सुसग्रह इत्याह – तत इत्यादि ।

3 तत्र विशेष इत्यादि षष्ठाधिकरणानुसरणम् ।

4 अर्चिरादिपथेति कथम्? समासजमनित्यमिति वदन्ति । तेन "ऋक्पूरप्धू - पथाम –" इति न प्रसरतीति भवति । नैतद् भवति । "पथो विभाषा" इति पृथग् योगात् । किं तेन? तेनेद गम्यते – नञ्समास एव पथो विभाषेति

---

१ "– दृष्टय ऋषि –" क

२ "गत्वा तत" ग.

३ "तत्र याव –" क

४ "– शब्दगृही –" क

[1] "उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु ।
ततो हि वायो· पुत्र च योऽसौ नाम्नाऽऽतिवाहिक· ।
ततोऽह पूर्वपक्षं चाप्युदक् सवत्सर तथा ।
तटितं वरुणं चैव प्रजाप सूर्यमेव च ।
सोमं वैश्वानर चेन्द्र ध्रुव देवीं दिवं तथा ।
ततो वायु पर प्राप्य तेनैति पुरुषोत्तमम्" इति ॥ ० ॥ १–६ ॥०॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाप्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
चतुर्थाध्यायस्य तृतीय पाद

---

योग पृथगक्रियतेति । नैतद् गम्यत यदृषिप्रयोगसिद्धचर्थमाह हि– आगमजमनित्यमिति, समासजमनित्यमिति । अथापि तुष्यतु भवान्, समाधानान्तरमुच्यते – 'अर्चिरादि' इति क्रियाविशेषणम् ।

1 तदय सर्वोऽपि पादार्थो ब्रह्मतर्के त्रिभि श्लोकै समाम्नात । अत्र भाष्ये चैकेन निर्बद्ध ।

## ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥

ॐ॥ उक्तप्रकारेण मुक्तानां तद्भयेषा भोगमाहास्मिन् पादे ।

[1]"सम्पद्याविहाय स्वेन शब्दात्" (४.४.१), "सङ्कल्पादेव च तच्छ्रुते." (४.४ ८.), "ब्राह्मेण जैमिनिरुपन्यासादिभ्य" (४ ४ ५), "चितिमात्रेण तदात्मकत्वादित्यौडुलोमि·" (४ ४ ६), "प्रदीपवदावेशस्तथा हि दर्शयति" (४.४ १५), "जगद्व्यापारवर्जम्" (४.४ १७.), "अत एव चानन्याधिपति." (४.४ ६), "स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने" (४ ४ २१), "भोगमात्रसाम्यलिङ्गाच्च" (४.४.२२.), "अनावृत्तिः शब्दादनावृत्ति· शब्दात्" (४.४.२३) इत्येतानि तदन्तरितानि च सूत्राणि व्याख्याति–

"यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः ।
जगत्सृष्ट्यादिविषयं महासामर्थ्यमप्यृते ।
यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् ।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ।
दु खादिरहिता नित्य मोदन्तेऽविरतं सुखम्" इति ।

---

1 भाष्ये यथा विशेषणान्युपात्तानि तेनैव क्रमेण सूत्राण्यनूवादाधिकरणक्रममविवक्षित्वा – सम्पद्येत्यादि । अय चात्राधिकरणप्रक्रम – "सम्पद्य –" इत्यादि त्रिसूत्र प्रथमाधिकरणम् (१–३) । तदेतद्व्याख्यातम् – यथासङ्कल्पभोगाश्च । "यथाकाम सर्वान् कामाननुभवति" इति सौपर्णश्रुति ॥ ० ॥ "अविभागेन दृष्टत्वात्" (४.४ ४) इति द्वितीयमधिकरणम् । एतदपि 'सहामुना' इति पुरैव व्याख्यातम् । "सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा" इति श्रुति । अत्रार्थे अमुनेति परमात्मना ॥ ० ॥ "ब्राह्मेण –" इत्यादि त्रिसूत्र तृतीयमधिकरणम् (५–७) । तदेतद्

**अत्रायमभिसन्धिः – उक्तप्रकारेण भगवन्त नारायणं सम्पद्यानादिससारसागरान्मुक्ता अविहायैव हरिमविरत सुखं मोदन्ते । [1]यथाकाम रमन्ते, यथाकाममुपरमन्ते । तत्रोभयत्रापि सुखमेव । यथाकामत्वात् । नचैतेषा[१] [२]भोगस्तदा-**

व्याख्यानम् – चिदानन्दशरीरिण । "मर्त्य देह परित्यज्य चितिमात्रात्मदेहिन" इत्याद्या स्मृतिरेनदेवाऽह ।। ० ।। "सङ्कल्पादेव –" इत्यष्टम सूत्र चतुर्थमधिकरणम् । एनदपि निगदव्याख्यातम् – यथासङ्कल्पभोगाश्च । "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितर समुत्तिष्ठन्ति" इत्यादिश्रुते ।। ० ।। "अत एवच –" इत्यादि नवम पञ्चमम् । तदेतद् व्याख्यातम् – अनन्यवशगाश्चैव विना स्वाभाविकोत्तमान् । "परमोऽधिपतिस्तेषा विष्णुरेव न सशय । तत प्राणादिनामान्ता सर्वेऽपि पतय क्रमात्" इति स्मर्यते च ।। ० ।। "अभाव बादरिराह ह्येवम्" (४४१०) इत्यादि सप्त सूत्राणि (१०–१६) षष्ठमधिकरणम् । एतदप्युक्तमेव – दु खादिरहिता चिदानन्दशरीरिण । इदमुपरिष्टाद् व्याख्यास्यते चिदचिच्छरीरपरतया ।। ० ।। "जगद्व्यापारवर्जम्" इत्यादि चत्वारि सूत्राणि (१७–२०) सप्तमम् । एतदुक्तम् – जगत्सृष्टयादिविषय महासामर्थ्यमप्युते यथेष्टशक्तिमन्तश्च ।। ० ।। "स्थितिमाह –" इत्यादि द्वे सूत्रे अष्टमम् । एतद् व्याख्यातम् – वृद्धिह्रासविवर्जिता । "न ह्रसते न वर्द्धते" इति श्रुति । "न हीयते यत्र गत्वा यत्र गत्वा न वर्धते" इतीतिहास ।। ० ।। "अनावृत्ति शब्दादनावृत्ति शब्दात्" इति नवममधिकरणम् । तदेतदुक्तम् – नित्य मोदन्तेऽविरत सुखम् । "नच पुनरावर्तते नच पुनरावर्तते", "सर्वान् कामानाप्त्वाऽमृत समभवत् समभवत्" इत्याद्या श्रुतय ।। ० ।।

1 तदनेन "यथाकाम रमते यथाकाममुपरमते" इति श्रुतिवचन स्मारयति । तदेतत् सूत्रे "भोगमात्रसाम्यलिङ्गाच्च" इत्युक्तम् ।

१ "नचैते भोगा –" क

२ "भोगास्तदा –" क ख ग

तदोत्साहसाध्य[१] । किन्तु यथासङ्कल्प[२] एव । योयो भोगस्तैरिष्यते स सङ्कल्पादेव समुत्तिष्ठति, प्रत्यत्नमकृत्वाऽपीत्यर्थः[1] । चशब्दोऽवधारणे ।

नच तेषा भोगस्यैवासम्भव, शरीरराहित्यादिति वाच्यम् । यतश्चिदानन्दसन्दोहात्मकस्य ब्रह्मणस्तादृशमेव शरीरमेतेषा स्वभोगायतनमविरोधेन सम्भवति[2] । अपिच, ततः पृथगेव चिदानन्दात्मक स्वशरीरं च तेषां सर्वेषामस्ति । तेनैव, अन्येनापि वा भुञ्जते । उभयथा च श्रुत्युक्तेः ।

[3]अचिच्छरीरमपि[३] किञ्चित् तेजिष्ठं सुखैकायतन स्वेष्टत्वेन[४] प्रवेष्टु शक्यम् ।

---

1 "भोगेष्टौ भोगे तदनिष्टावुपरमे च न प्रयत्नापेक्षा" इति हि तत्त्वदीपिका ।

2 चिदानन्दो हि भगवान् । यत् तस्य शरीर तदपि चिदानन्दावेव । तेन चिदानन्दशरीरेण शरीरिणो मुक्ता चिदानन्दशरीरिण । स्वयमेव च चिदानन्दात्मकशरीरा चिदानन्दशरीरिण । एतेन "ब्राह्मेण जैमिनि –", "चितिमात्रेण–" इति सूत्रे व्याख्याते । अत एवोभयाम्नानात् "एवमप्युपन्यासात् पूर्वभावादविरोध बादरायण" (४ ४ ७) इत्यपि सूत्र सगृहीतमेव ।

3 अथेदानी "भाव जैमिनिर्विकल्पाम्नानात्" (४ ४ ११) इत्यपि सूत्रमर्नेनैव भाष्यपदेन व्याचिख्यासदाचार्य इत्याह – अचिच्छरीरमपि । शरीरमिति जड विवक्ष्यते । चिदिति विकल्पाम्नानम् । तच्च केवलमानन्दार्थम् । न ससार इव दु खभोगाय च । "ज्योतषैव रूपेण चिता वाऽचिता वा" इति विकल्पमाम्नाय "आनन्दी ह्येवैष भवति नानानन्द कश्चिदुपस्पृशति" इति व्यवच्छेदात् । एतेनैव "द्वादशाहवदुभयविध बादरायणोऽत" (४ ४ १२) इत्यपि समग्राहि ।

---

१ "साध्या ।" क ख ग

२ " – सङ्कल्पा एव" क ख ग

३ " – मपि यत्किञ्चित् तन्निष्ठम्" क

४ "स्वेष्टत्वे प्रवेष्टुम्" घ

नान्यथा[१] तदस्ति । तथाच योजना[२] – आनन्दार्थं शरीरिणश्चिदित्यन्वयः । सुखैकभोगार्थं जडशरीरिणो वेत्यर्थः । एतद्भावाभावपक्षयोर्जाग्रत्स्वप्नयोरिव[1] भोगः सम्भवति । नच तत्र दुःखस्पृष्टिराशङ्कनीयेति "दुःखादिरहिताः" इत्युक्तम् । आदिशब्दात् तत्कारणभूत पापम्, सुखानुत्पत्तिः, तन्नाशश्चेत्यादि-दोषा गृह्यन्ते । अतस्तैरपि रहिता इत्यर्थः । युक्तं चैतन्मुक्तानां प्रदीपवत्, शुभस्यैव भोगो नान्यस्येति[2] । दीपस्य स्वभावशक्त्या तथात्वं सम्भवति, नहि मुक्ताना-मिति मा भूत् । यथेष्टकर्मणि यथेष्टा च स्वभावशक्तिर्मुक्तानामप्यस्ति । चशब्दान्नच काचिदशक्तिः । सर्वकामावाप्तिश्रुतेः । एवं चेत् यदाकदाचिज्जग-न्निर्माणकर्मापि कुर्वन्ति, इच्छाया सत्यां सुकरत्वादित्येतदपवदति – "जगत्–" इत्यादिना । यत्तज्जगत्सृष्टिस्थित्यादिव्यापारविषयं महासामर्थ्यमीश्वरैकाश्रयं प्रसिद्धं तदृत एव तेषामेषा यथेष्टशक्तिः प्रतिज्ञायते । अपिशब्दाज्जीवयोग्यमपि विकारविषयमृते[3] । तयोरत्युच्चनीचत्वेनायोग्यत्वात्[३] । नचायोग्यमपि[४]

---

1 एतेन "तन्वभावे सन्ध्यवदुपपत्ते" (४ ४ १३), "भावे जाग्रद्वत्" (४ ४ १४) इति सूत्रे मनसि करोति ।

2 तदनेन "प्रदीपवत् –" इत्यादि विवृतम् । दीपिकाया सम्भवदपि कार्ष्ण्यं यथा न प्रदीपो भुक्त इति ।

3 "विकारावर्ति च तथाहि दर्शयति" (४ ४ २०) इति सूत्रमेतेन व्याख्या-

---

१ "नान्यथा । तथाच" घ

२ "योजना । चिद्रूपा अपि आनन्दविशेषभोगार्थं जडशरीरिणोऽपि कदाचिद् भवन्तीति । एतद्भावा –" क ख ग

३ "–त्वेन योग्यत्वात्" इति कोशेषु पठचते । "अयोग्यत्वात्" इति भाष्ये प्रमादलिखितमिति भाति ।

४ "नचायोग्य विमु –" क "नचायोग्यमपि मुक्ता –" घ

विमुक्ता इच्छन्ति । निर्दोषत्वनियमात् । मनोदोषादेव ह्ययोग्यमिच्छन्तो हन्यन्ते । तस्मात् तदुभयमृतेऽपि यदात्मयोग्य सामर्थ्य शुभाशुभयोर्भोजनवर्जनादौ निर्विघ्नकरत्वादिना निर्वाहकं स्यात् तदेवात्राभिप्रेयत इति नातिप्रसङ्ग ।

नच मुक्तानामन्येऽधिपतयो भवन्ति, अनिष्टत्वात् । स्वयमेव स्वाधिपतय इति स्ववशगा[१] एव । अतः शुभानुभवादेर्नियमविपर्ययः परतोऽपि नाऽपद्यते । नच बद्धा मुक्ताधिपत्यमर्हन्ति, अयोग्यत्वादिति चशब्दार्थ । न तावता नैराधिपत्यमधिमुक्त्याशङ्कयम् । योग्यान् विनैवान्याधिपतिनिषेधात् । के तर्हि केषां[२] गुरव ? ये येभ्य स्वाभविकगुणैरुत्तमा गुरुपरमगुर्वादय[1] परमपुरुषो विष्णुश्च ते तेषामधिपतय एव क्रमाधिका अभिधीयन्ते[३] । यत्प्रेरिता शिष्यप्रशिष्याद्यास्तरुणतरा. सुरतरुसुरभिसुमनोमालभारिण[2][४] सुखमविरतमपि सरामा[५] मोदन्ते । अतस्तान् विनैवान्याधिपतिनिषेधः कृत. ।

---

तम् । "प्रकृतिविकारशरीराद्यभिमानिषु जन्ममृत्यादिविकारवत्सु ससारिषु व्यापारो मुक्ताना न विद्यने" इति तत्त्वदीपिका ।

1 भाष्येऽप्येतदुक्तम् – "आचार्यश्चैव सर्वेऽपि यैर्ज्ञानि सुप्रतिष्ठितम्" इति वाराहवचनम् ।

2 "इष्टकेषीकामालाना चिततूलभारिषु (पाणि० ६ ३ ६५ ) इति सुमनोमालभारिण ।

---

१ "स्ववशा एव" क

२ "केषा दाधिपत्य मानुषेषु ये येभ्य " घ मध्ये अक्षराणि गलितानि।

३ "अधीयन्ते" क ख घ

४ " – सुमनोमनोहारिण " क

५ "सुरामा मो – " ख

नच जीवन्मुक्ताविव[१] मुक्तावपि पुनःपुनरुपास्तौ फलस्य वृद्धिः स्यात् । नापि विपर्ययेण ह्रास । विधिनिषेधयोर्मुक्तेष्ववृत्तेरित्येदभिप्रायेण "वृद्धिह्रास-विवर्जिताः" इत्युक्तम् । वृद्धिह्रासाभ्या विशेषतो वर्जिताः सामान्यतः सहिता इत्युपसर्गार्थ । तस्मादेव सम्प्राप्तसम्पदा[२] क्रमाधिकानामब्धिवदेव वृद्धि-ह्रासावतिमर्यादौ कदाचिदपि न भवेताम् । समर्यादौ तु स्यातामेव[1] । अप्रति-षिद्धत्वात्[३] ।

तस्माद् यथायोग्यपरिपूर्णत्वेन सस्थितिरेव मुक्तानामिति नियम, नच कदाचित् तत. पुनरावर्तन्त इति वक्तुं "नित्यम्" इति विशेषणम् । अविरतमिति तु यावत्सस्थितिनैरन्तर्यमेव[४] मोदस्य दर्शयति । नत्वनन्तकालीनत्वमित्यपुन-रुक्ति. ।। १ – ६ ।। ० ।।

[2]उक्तार्थनिगमनार्थ[५] चैतन्नित्यपदम् । यदेतदध्यायचतुष्टय्यामाऽऽदित आऽन्ता-दुदित सर्वार्थजात तन्नित्य निर्णीतम्, नतु सन्दिग्धम्, कुत ? अपरिमितवेद-[६] सिद्धत्वादिति सकलमनाकुलम् ।। ० ।। ० ।।

---

1 तयाच भाष्ये – "अवृद्धिह्रासरूपत्व मुक्ताना प्रायिक भवेत् । कादाचि-त्कविशेषस्तु नैव तेषा निषिद्धयते" इति कौर्मं वचनम् ।

2 "नित्य सदातन चोक्त नित्य नियतमेव च" इति शब्दनिर्णय मनसि निधायाऽह – उक्तार्थनिगमनार्थ च ।

---

१ " – विव पुन पुनरुपा – " क

२ " – सम्पदा क्रमा – " ख

३ "अप्रतिषेधात्" क

४ " – नैरन्तर्य मोदस्य" क ग

५ " – निगमन चैत – "ख

६ " – वेदप्रवाहसिद्ध – " घ

अथेदानीमेव परिसमापित ([1]सग्रहभाप्य भगवानाचार्य शिष्यशिक्षायै) विज्ञापयन्नात्मकृत स्वस्वामिनि[२] विष्णौ समर्पयत्युत्तरपद्येन । तदुत्तरेण तु ग्रन्थावसानेऽपि क्रियासमभिहारेण तस्मै नमस्क्रियामाचरति[३] –

"पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः ।
कृतोऽय प्रीयतां तेन परमात्मा रमापतिः ॥

नमोनमोऽशेषदोषदूरपूर्णगुणात्मने ।
विरिञ्चिशर्वपूर्वेड्यवन्द्याय श्रीवराय ते" ॥ ० ॥

[1]यस्य त्रिरूपाण्युदितानि वायो-
वेंदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी
संक्षेपभाष्यं कृतवान् रमेशे ॥

सम्प्रीयता तेन कृतेन सोऽय
रमापतिर्मे परमेष्टदेव ।
[2]विरिञ्चवाणीविपवासवाना
परात्पराणामपि य परात्मा ॥

---

1 षडभिश्चरणै प्रथमश्लोकार्थमाह । बळादौ वेदे बळित्थासूक्ते । परमात्मा व्याख्यायते परमेष्टदेव इति ।

2 द्वितीयपद्यस्योत्तरार्ध विवृण्वन्नेव परमात्मशब्दस्यार्थान्तरमाह – विरिञ्चे-त्यादि । शर्व एव शेषो भविष्यन्निति न पृथगुक्त । वासवानमिति बहुवचनमाद्यर्थे ।

---

१ ( ) एतावान् भाग कोशेषु लुप्त इत्यर्थानुगुण्याय पूरित ।
२ " – स्वामिनि समर्प – " ख
३ "नमस्क्रिया करोति" ख

[1]अज्ञानदु.खप्रमुखै. समस्तै-
दोषैर्विहीनाय गुणार्णवाय ।
विरिञ्चशर्वेन्द्रमुखैरपीडच
नमोनमः श्रीरमणाय तुभ्यम् ।।

[2]सत्सौख्यविज्ञानपुरोगपूर्ण-
गुणैकदेहाय पुमर्थदोग्ध्रे ।
अशेषवन्द्याय विशेषतो मे
व्यासाय देवाय नमोनमस्ते ।। ० ।।

[3]आपादतलमस्तिष्क[१] निभृतानन्दचिद्घन ।
नारायणो रमानाथो रमता मे मनोरथे ।। १ ।।

---

1 द्वितीयश्लोक क्रमाद् व्याख्याति – अज्ञानेत्यादि द्वाभ्या श्लोकाभ्याम् । एतत्पक्षे " – दोषदूरपूर्णगुणात्मने" इत्येक पदम् । विशेषणयो समास । ईडचेति वन्द्यायेति च भिन्ने पदे इति कृत्वा व्याख्यानम् – विरिञ्च-शर्वेन्द्रमुखैरपीडच ।

2 पूर्णगुणात्मने इति भिन्न वा पदमिति तदर्थमाह – सत्सौख्येत्यादि । आत्मशब्दो देहवचनश्चात्र भवति । विरिञ्चशर्वपूर्वेडचवन्द्यायेति समस्त वा पदमिति तदर्थ निर्ब्रूते – पुमर्थदोग्ध्रे अशेषवन्द्याय । विरिञ्चादिभि-रशेषैरीडचैरपि वन्द्याय । इद परात् पराणामिति विशेषणात् पूर्वमेव सूचितम् । अशेषैरीडचाय च वन्द्याय च । पुमर्थदोग्धा हि स्तूयते । "वृष्णे चोदस्व सुष्टुतिम्" इति हि श्रूयते । तदनेन श्लोकेन चतुर्लक्षणस्य शास्त्रस्य सर्वोऽप्यर्थं सुगृहीतो भवति । तदर्थमेव चैव व्याख्येयम् । वन्द्यायेति भिन्न पदमिति कृत्वा पुनरर्थान्तरमाह – विशेषतो मे वन्द्याय व्यासायेति । "जगद्गुरूणा गुरुमञ्जसैव विशेषतो मे" इति ह्युक्तम् । एतेनान्तेऽपि शास्त्रप्रभवो गुरुरपि प्रणतो भवति ।

3 इदानी स्वयमन्ते मङ्गलान्याचरति । साक्षात्कृतप्राणप्रमुखावतारश्रीमुख-

---

१ " – मस्तिष्कान्निभृ – " ग

नन्दयन् मन्दहासेन सुन्दरीमिन्दिरा हरि ।
[1]अमन्दानन्दनिष्यन्दी रमतां मे मनोगृहे ॥ ३ ॥

दोर्दण्डख(ण्डिता[2])रातिः पालयन् भुवनत्रयम् ।
आनन्द[3] . . . . . . . . . . . . .रे ॥ ३ ॥

ज्ञानिभिर्हृदयाम्भोजे निर्मले रत्नविष्टरे ।
दृष्टं निविष्ट मुख्येष्टं सन्दिदृक्षे रमेश्वरम् ॥ ४ ॥

नन्तारोऽनन्तगरुडब्रह्मरुद्रपुरोगमा· ।
यस्याम् सतत[4] देवं शुश्रूषेऽहं रमावरम् ॥ ५ ॥

सत्सूत्रनिकरार्थो यः सर्ववेदार्थबृंहित ।
त सद्भि· प्रोदित सन्त प्रविविक्षे रमापतिम् ॥ ६ ॥

येनाय सकलोऽप्यर्थो भाषितोऽप्यनुभाषित· ।
प्रोदितश्चापि त मध्वं प्राणेश प्रणमाम्यहम् ॥७॥

---

समुद्गतसच्छास्त्रप्रवचनानुभूतप्रभूतानन्दा पूर्वे स्वगुरुपरमगुरव सुदृढश्रद्ध सभक्त्यादर च यत्सच्छास्त्रमवृणत तदप्युपश्लोकयति महता सरम्भेणेति मङ्गलम् ।

इमामाचार्यगोविन्द प्रमृष्टा शब्दतोऽर्थत ।
वितेने विमला व्याख्या विदुषामेव तोषणीम् ॥
इत्याचार्यगोविन्दस्य कृतिषु
आनन्दमालाटिप्पनी समाप्ता

---

१ "अमितानन्द –" क २ लुप्ते अक्षरे कोशेषु ।
३ . अक्षराणि लुप्तानि । 'आनन्दरूपी भगवान् रमता चित्तमन्दिरे' इति पाठयमविच्छेदाय ।
४ "यस्यानुगा स्युस्त देवम्" ग

विष्णो प्रसादैकबलात् सर्वशास्त्रार्थसग्रहम् ।
यश्चकार नमस्तस्मै पूर्णप्रज्ञाय नित्यशः ॥ ८ ॥

यत्प्रसादप्रासारेण दारुयोषेव मे मति. ।
तट्टीका रचयामास लेशेनापि सुदुष्कराम् ॥ ९ ॥

इमामानन्दमालाख्या स्वरूपानन्दमालिने ।
दीपमालामिवात्यल्पां जगद्दीपाशुमालिने ॥ १० ॥

सुरै. सम्पद्भिरर्च्याय मानुषैरम्बुविप्लुषा ।
समर्पयाम पूर्णाय विष्णवे सर्वजिष्णवे ॥ ११ ॥

आ मेरोराऽण्डभाण्डात् सुरवरनिकरास्थानसंस्थानमान्यात्
अन्यान्यानेकविद्वत्प्रवरशतशतीकीर्ति[1] कर्पूरपूरात् ।
आ ग्रन्थादाऽर्द्धवर्णाद् रथचरणधरार्थाद् विशेषै समर्थात्
क्वासौ वादीन्द्रसिंह पटुतम उत यः खण्डयेन्मध्वशास्त्रम् ॥ १२ ॥

आ देवादा च मर्त्याद् बहुदिवसमणेः [2] प्रभाया
को वा वादीन्द्रसिंह कविकुलतिलक कोऽथवा मध्वशास्त्रे ।
जल्पे जाज्वल्यमानो[3]. .. . . पक्षपाती
जिज्ञासुर्ज्ञानसार सकलमनुपिबेन्मानुषो वा लयाब्धिम् ॥ १३ ॥

आऽब्जोत्थादा प्रधानात् सकलचिदचितो भाविता. सत्पदार्थाः
क्षुद्रार्थं वै दिशेयुः परपुरुषवशा ह्यातृणादा करीषात् ।
सर्वेषा योग्यसृष्टिस्थितिलयनियमाज्ञानदृग्बन्धमोक्ष
कुर्यादेक स्वतन्त्रो हरिरिति सुमते[4] तच्च शास्त्र प्रमाणम् ॥ १४ ॥

---

१ "–शतशरत्कीर्ति–" ग
२ लुप्तान्यक्षराणि । ग पुस्तके तु "कीटके वा" (?) इतीव पठचते ।
३ लुप्तान्यक्षराणि सर्वेष्वपि कोशेषु । ४ "सुमते" ग

सत्यं सत्य तदित्थं शपथशतयुत वच्मि हस्तावुदस्तौ
अस्तव्यस्तोक्तिरास्ता शृणुत शृणुत हे मानवा माऽवमान्य[1] ।
स्वामी सर्वस्य विष्णु. क्वचन च सदृशो नाधिकस्तस्य हि स्यात्
सत्ये[2] भातीति सत्य श्रुतिपतिलिखिता वैजयन्ती जयन्ती ।। १५ ।।

वन्दे विष्णुं सुरेश स्वजनपरिवृत ताश्च वन्दे क्रमेण
श्रीभूरूपा तदिष्टामथ विधिपवनौ तत्प्रिये वाग्द्युदेव्यौ ।
पक्षीशाहीशरुद्रांस्तदुदितदयिता या सुपर्ण्यादिसञ्ज्ञा
शक्रादीन् काममुख्यानपि सकलसुरान् तद्गुरून् मद्गुरूश्च ।। १६ ।।

नमस्ते श्रीशास्तु प्रियतम समस्तादपि सदा
नमस्ते प्राणेश प्रणतसुरसङ्क्लृष्ट शुभद ।
नमस्तद्दासा वः परमगुवस्तत्त्वमतिदा
नमस्तद्दासा व.[3] पुनरिति गुरुभ्यो मुहुरपि ।। १७ ।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीब्रह्मसूत्रसग्रहभाष्यस्य टीकाया
त्रैविक्रमार्यदासकृतावानन्दमालाया
चतुर्थोऽध्याय

——०——

**समाप्तोऽय ग्रन्थ**

---

१ "माऽवमान्य ।" ख "माऽवमान्ये ।" (?) ग

२ "सत्यम्" ग

३ "नमस्तद्दासेभ्य " ग